[उत्सृज्य सून]सुकुमारशरीरवल्लि !
भूमीतले बत निषीदसि कस्य हेतोः ।।३२।।

यस्याभिरामतमधामजितः कलङ्क-
मङ्केन सुन्दरतरोऽपि विधुर्दधाति ।
सौन्दर्यसारसदनं वदनं भवत्या-
[स्तच्चाधुना बत (22b) रुपाकलुषं विभा]ति ।।३३।।

इन्दीवरद्युतिविलोलविलोकितेन
यत् सौख्यसागरमुदारतरं ततान ।
शोणायमानमधुनाक्षियुगं तदेव
कान्ते ! कथं मम दुनोति मनोऽनुवेलम् ।।३४।।

आन[न्दनद्युतिसुधानिधिरप्यकाण्डे
कान्ते ! भवद्वदन]पार्वणशार्वरीशः ।
धत्ते तुलां तुहिनसङ्गमदूषितस्य
किं देवि ! संप्रति सरोरुहकोरकस्य ।।३५।।

यत्संगमादयि समिद्धसुधासमुद्र-
स[ान्द्रावगाहनसुखानि ममोल्ल]सन्ति ।
तत्रैव सर्पति तनौ तव तन्वि ! तापो
वामस्य कि बत विधेरविधेयमस्ति ।।३६।।

संसूचयन्निव निरन्तरसंभृतानि
कल्याणवाणि ! घनकोपविजृम्भि[तानि] ।
[मध्यं शिरीषमृदुलाङ्गि] कृशं कथं ते
कम्पः पयोधरमहीधरयोर्दधाति ।।३७।।

प्राणाधिकप्रियतमे ! न हि तावकीनं
स्वप्नेऽपि विप्रियमकारि मया कदापि ।
तत् कि शुभे ! शशकशोणितशोणिमान-
(23a)मालम्बते सपदि ते नयनारविन्दम् ।।३८।।

दासोऽहमब्जनयने ! निबिडानुराग-
मुल्लासय स्मितसुधामधुरं मुखेन्दुम् ।
आनन्दवारिधिरुदेतु चिरं समन्ता-
दालोकवान् भवतु भाविनि ! जीवलोकः ॥३९॥

सद्यो निवेदय दयामयि ! किं निमित्त-
मुज्जृम्भते सपदि तापभरो भवत्याः ।
त्वामीदृशीं यदवलोकयतोऽनुवेल-
मुद्वेल्लिता मदसवः सततं भवन्ति ॥४०॥

एवंविधानि विविधानि निशम्य पत्यु-
र्मुग्धानि वाग्विलसितानि विनिःश्वसन्ती ।
नम्राननना निबिडबाष्पभरं निरुध्य
तन्वी चिरादिदमुवाच वचस्तदानीम् ॥४१॥

शीलोच्चयेन विमलेन नवैश्चरित्रै-
र्मान्याः समस्तभुवनेषु भवन्त एव ।
श्रीवत्सलाञ्छन ! कदापि भवादृशेष्व-
विज्ञा किमाचरति कोपविजृम्भितानि ॥४२॥

गोपीपते ! प्रबलदैववशाद् भवन्त-
मासादयन्ति दयितं खलु वामनेत्राः ।
शीलं मनोज्ञमवलोक्य च ते न यु(23b)क्तं
मानाभिधानमपि हन्त मनस्विनीनाम् ॥४३॥

हे नन्दनन्दन ! न कोपकषायिताहं
नाथानुनाथनशतेन वृथा प्रयासः ।
मद्दैववैभवमिदं त्वयि जीवनाथे
यज्जायते बत मनागपि चित्तखेदः ॥४४॥

इत्थं निशम्य सुदृशः समुदीरितानि
श्रीमन्मुरारिरपि खिन्नमना बभूव ।

आगत्य नीतिनिपुणाथ सखी तदीया
काचित्तदा सपदि माधवमाबभाषे ॥४५॥

एणीदृशः कुपितकारणमत्युदारं
नाथावधेहि निभृतं विनिवेदयामि ।
अज्ञातहेतुगहना हि नृणां विकाराः
प्रायः प्रभो ! दुरुपचर्यतमा भवन्ति ॥४६॥

गीर्वाणसंसदि सुपर्वपतेः प्रसाद-
मासाद्य हृद्यतरदेवतरुप्रसूनम् ।
[आगत्य] भक्तिभरभावितमानसेन
दत्तं मुकुन्द ! भवते खलु नारदेन ॥४७॥

तद्देव ! देवकुसुमं सविधस्थितायै
दत्तं तदैव भवतापि विदर्भजायै ।
प्रायः प्रसादमधिकं हि महानुभावाः
सेव्याः सदा सविधवर्तिषु वर्तयन्ति ॥४८॥

तन्नाथ ! कल्पविटपिप्रसवप्रदानं
श्रुत्वा समुन्नतिविधायि विदर्भजायाः ।
सद्यः समुल्लसदसीममनोभिताप-
वारांनिधौ निरवधौ सुमुखी ममज्ज ॥४९॥

[1]तन्नाकनायकमिदं त्वनुना[थ्य मन्युः]
शक्योऽपनेतुमरविन्ददृशः कदापि ।
वक्रायितं हृदयमब्जदृशां प्रविश्य
किं नाथ ! निःसरति रोषरसः सुखेन ॥५०॥

काकूक्तिभिः समनुनीय भृशं कृशाङ्गी-
मङ्गीकुरु त्वमिह कल्पतरुप्र[दानम्] ।

---

१ तन्नाय नायक Ms

एतावता प्रमुदिता भविता सखी मे
नो चेन्मुकुन्द ! भवितात्र महाननर्थः ॥५१॥

अत्यादरादिदमुदीर्य हरेः पुरस्ता-
न्मौनं सरोरुहमुखी चिरमाबभार ।
श्रद्धासमृद्धह्[दयाभिहितं तदीयं
मेने विशिष्य बहु] चेतसि केशवोऽपि ॥५२॥

श्रीमानथ स्मितमनोज्ञमुखारविन्द-
विद्योतमानदरदन्तमनोहरश्रीः ।
मानापनोदनमुदारमनास्तदानी-
मानन्दनं वचनमिन्दुमुखीमुवाच ॥५३॥

(24b) [क्षान्तास्त्वया कति न कारुणिकप्रवृत्त्या
कान्ते ! मया] विरचिता विविधापराधाः ।
दीर्घादरं यदि न पश्यसि पङ्कजाक्षि !
प्रागेव तन्मदसवः खलु निःसरन्ति ॥५४॥

गत्वाथ पङ्कजसरःसविधं कथञ्चि-
दाकुञ्चितस्तिमितशोणि[तलोचनायाः] ।
दोधूयमानशतपत्रसमानशोभं
जग्राह पाणिमनुरागपरो मुकुन्दः ॥५५॥

साशङ्कमङ्कमधिरोप्य हरिस्तदानीं
सद्यस्तदीयवदनं चतुरश्चुचुम्ब ।
आलिङ्ग्य तामथ मनोज्ञरुचिर्नताङ्गी-
मङ्गीचकार सुरराजतरुप्रदानम् ॥५६॥

विद्राव्य देवनिवहानवहेलयैव
निर्जित्य शौर्यविभवेन सुराधिराजम् ।
यद्यानयामि न नितम्बिनि ! पारिजातं
भूयास्तदा सुमुखि ! मे विमुखी त्वमेव ॥५७॥

एवं गिरा रुचिरया शपथैरनेकै-
मनि घने मुरभिदा सुदृशोऽपनीते ।
सन्ध्यारुणाम्बरमनोहरकान्तिरुच्चै-
राविर्बभूव वलदिन्दुमुखी सखीव ॥५८॥

एणीदृश॰ सपदि लोच[न].. ..................
................. ........................॥५६॥[1]

## [ पञ्चमः सर्गः ]

(32 a)................. . ... ...नैः समानैरपि ।
सन्तोषं गमयन् मनः खलु नृणामापात्रमापामरं
स्मेरास्यो विससर्ज संसदमतिप्राप्तोत्सवः केशवः ॥१॥

स्वान्तध्वान्तविधूननं प्रणमतां दीर्घोदरं ध्यायता
धन्यं किञ्चन हृद्गतं नवजवासिन्दूरसान्द्रं महः ।
धीरश्रीकविकर्णपूरकृतिना कौतूहलान्निर्मिते
काव्ये चारुणि पारिजातहरणे सर्गो ययौ पञ्चमः ॥२॥

## [ षष्ठः सर्गः ]

नारदं नयदयाविशारदं शारदं विधुमिवातिसुन्दरम् ।
आजहार मनसा नवादराद्बादरायणिसमानमच्युतः ॥१॥

सोऽधिगत्य हृदयं जगद्गुरोराजगाम सहसा महामुनिः ।
ज्ञातनाथमनसो विलम्बितुं नालमुज्ज्वलधियः कथञ्चन ॥२॥

द्रष्टुमुत्सुकमना मुखं हरे राजहंस इव मानसं सरः ।
संचरन्नभसि निर्मलद्युतिर्लोकलोचनमनन्दयन्मुनिः ॥३॥

शीतदीधितिकराभिरामया भासमानतनुकान्तिधा(32b)रया ।
स्वर्णदीमभिनवामिवोच्चकैराततान गगनाङ्गने मुनिः ॥४॥

[1] ff 25-31 covering a portion of canto IV and almost the whole of canto V are lost.

चारुचन्दनतुषारसुन्दरं कायकान्तिभरभासिताम्बरम् ।
लोकलोचनविनोदिनं जना मेनिरे तमखिलाः कलानिधि[म्] ॥५॥

कामिनीललितभाषिताधिकं रामणीयकमुदारमागतैः ।
उद्गिरन्निव सुधारसानसौ वल्लकीयनिनदैर्व्यराजत ॥६॥

सन्ततस्मितमयूखमेदुरैः शान्तभाववलितैर्दृगञ्चलैः ।
अम्बुजासनसुतो नभस्तलं पुण्डरीकमयमाततान सः ॥७॥

उन्नतानि मनसोऽपि मानिनां स व्यतीत्य भुवनानि नाकिनाम् ।
आससाद सविधं जगद्गुरोः किं करोति न समाचितं तपः ॥८॥

वीक्षितो वलितनेत्रमासनादुत्थितेन सगणेन शार्ङ्गिणा ।
पर्वतेन सहितस्तदादरादम्बरादवततार नारदः ॥९॥

संनिवेश्य कनकासनं ततः स्वागतं च परिपृच्छ्य सर्वतः ।
(33a) पर्वतेन सहितं विधेः सुतं पर्यतूतुषदसौ सपर्यया ॥१०॥

अर्चितो भगवता सपर्वतः सर्वतः स खलु संमदं दधौ ।
स्वामिना हि सदयेन सत्कृताः प्राप्नुवन्ति सुधियः कृतार्थताम् ॥११॥

सादरेण हरिणा विनिर्मितां प्राप्य सत्कृतिमतीव हर्षितः ।
नारदः सविनयो नयोज्ज्वलां निर्मलां सपदि वाचमाददे ॥१२॥

अद्य मे मनसि संमदो महानद्य मे नयनयोः कृतार्थता ।
अद्य मे जनुरभून्महोज्ज्वलं यद्व्यलोकि पदपङ्कजं तव ॥१३॥

किं न सन्ति भुवने महर्षयः किं न ते भवति भक्तिभाविताः ।
यत्तथापि मयि तेऽधिका दया तत्कृपाभरविजृम्भितं तव ॥१४॥

श्रीप[ते !] समुदिता प्रसन्नता यादृगुल्लसति सन्निधौ तव ।
स्यन्दमानकिरणे हिमद्युतौ तादृशी किमु कदापि जायते ॥१५॥

अम्बुजाक्ष ! जगतो मुहुर्मुहुर्निर्मितिस्थितिविनाशकारकः ।
तावकीनमहि(33b)मा महामते ! पारमेति न गिरां कदाचन ॥१६॥

संस्मृतिर्भगवता कृताऽद्य या सा मदीयसुकृतैर्विनिर्मिता ।
चापलात् सहजतस्तथापि मे तत्र कारणमुदीक्षते मनः ॥१७॥

जातिमात्रविहितादरादहो मादृशाद्यदुपते ! द्विजन्मनः ।
जायते यदि विधेयमीश ! ते तत्तवैव महिमा महाद्भुतः ॥१८॥

एतदप्यनुचितं निवेदितं तावकीनपुरतो जगत्पते ।
यद्भवच्चरणपद्मसेविना क्वापि नाञ्चति जगत्यसाध्यता ॥१९॥

तन्निदेशय निदेशकारिणं मां मुकुन्द ! करवाणि किं तव ।
ज्ञातनाथहृदयोऽपि सेवकः कृत्यवस्तुनि निदेशमी[क्ष]ते ॥२०॥

किं व्रजामि सविधं महेशितुः किं विरिञ्चिपुरमुत्पतामि वा ।
माधव ! ज्वलनसारथेरिव क्वापि नापि मम कुण्ठिता गतिः ॥२१॥

देव ! तावकमुदे मुदा निधिं देवराजतरुमानयामि किम् ।
त्वत्प्रसादपरिपूर्णमुच्चकैः पश्य नाथ ! (34a) तपसो बलं मम ॥२२॥

न प्रमाणमसमीहितार्पकं कोमलाङ्गुलिदलामलद्युति ।
ध्यायतस्तव पदाम्बुजद्वयं क्वापि नैव मम कुण्ठितं मनः ॥२३॥

एवमुक्तवति नारदे मुहुः पर्वतोऽपि विकसन्मुखाम्बुजः ।
मौलिचालनमुदीरयन् परं गौरवं विनिदधे तदुक्तिषु ॥२४॥

हृद्यकानि मकरन्दसारतो निर्मलानि मनसः सतामपि ।
नारदेन गदितानि सादरं सोऽधिगत्य मुमुदेतरां हरिः ॥२५॥

उल्लसन्नयनपत्रशोभिना भासितेन वलितस्मितश्रिया ।
आननेन लघयन् सरोरुहं म[ा]धवो मधुरया गिरावदत् ॥२६॥

दुर्निमित्तविनिवृत्तिकारकं तावकं पदमपश्यतो मम ।
भानुमन्तमिव वारिजन्मनः क्वापि न व्रजति सम्मदं मनः ॥२७॥

सुप्रसन्नहृदये त्वयि प्रभो ! वाञ्छितं जगति किं न लभ्यते ।
उ[द्ग]ते शशिनि संभृतद्युतौ दुर्लभाः किमिति शीतला रुचः ॥२८॥

हंसयान(34b)सुत ! मादृशामिदं श्रूयतामुपचितं निवेदितम् ।
त्वय्यशेषविषयोपदेशके नाथ ! किं न कथनीयमस्ति नः ॥२६॥

नाकनाथमनुनाथ्य मत्कृते पारिजातकुसुमं समाहृतम् ।
अर्पितं च भवता मयि द्रुतं तद्विदर्भनृपनन्दिनीपुरः ॥३०॥

पारिजातकुसुमं तदा मुने ! मामयाचत विदर्भनन्दिनी ।
निर्भरप्रणयभङ्गभीरुणा तन्मयापि सुदृशे समर्पितम् ॥३१॥

तत्कुतोऽपि बत दुर्जनाननात् संश्रुतं सपदि सत्यभामया ।
मोदमेति हि मनः सदा सुहृद्वैदवस्नुनि मलीमसात्मनाम् ॥३२॥

तद्विदर्भतनयोन्नतिप्रदं संनिशम्य कुसुमार्पणं तदा ।
द्रागनु[न]यनिविष्टमानसा मानसागरजले ममज्ज सा ॥३३॥

तत्सखीपरिकरैरुदीरितं दुर्विधेयमधिगत्य सुभ्रुवः ।
तद्गताधिशतविद्धचेतसा यातमाशु च मया तदन्तिकम् ॥४४॥

बिभ्रतीं च रुचिशेषमङ्गकं (35a) षोडशीमिव कलां कलानिधेः ।
पश्यतः प्रणयिनीं म[मो]च्चकैः शङ्कयाऽऽकुलितमास मानसम् ॥३५॥

सत्वरं विरस[भाव]सादितः किं करोमि भवदीप्सितं प्रिये ।
एवमुक्तवति मय्ययाचत द्रागसौ सुरमहीरुहं तदा ॥३६॥

स्वीकृतं बत मयापि तन्मुदे पारिजाततरुदानमञ्जसा ।
निर्भयप्रणयमन्द्रितात्मनः किं विचारमवगाहते मनः ॥३७॥

याचितुं सुरतरुं तदञ्जसा देवराजनगरी गरीयसी ।
अम्बुजासनतनूज ! गम्यतां गम्यता न तव कुत्र जृम्भते ॥३८॥

आशिषः स्वयमुदीर्य सादरं मादृशामथ नतिर्निवेद्यताम् ।
देवराजमनुपृच्छ्य मङ्गलं मामकीनकुशलं च कथ्यताम् ॥३६॥

सर्वमेतदुचितादनुक्रमात् स्वीकृतं खलु निवेद्य मामकम् ।
उच्यतां मम गिरा चिरादिदं नारद ! प्रसभमेव वासवः ॥४०॥

कारणादुपचितान्महामतिर्याचते सुरतरुं तवानुजः ।
(35b) तत्त्वदीयकरुणा विजृम्भतां दीयतां विबुधनाथ ! स द्रुमः ॥४१॥

संस्मृतोऽपि भगवन् ! समीहितं पूरयत्यविरतं भवान् नृणाम् ।
माधवाय सततं नतात्मने भूरुहः खलु कथं न दीयताम् ॥४२॥

सर्वदाखिलनिदेशकारिणे लालनीयमनसेऽनुजन्मने ।
भूरुहोऽपि यदि नैव दीयते तत्कमञ्चतु विचारचातुरी ॥४३॥

इत्थमर्थिवदुदारचेतसा याचितोऽपि भवता सुरद्रुमम् ।
यद्यसौ नहि ददाति दुर्मदस्तन्निगद्यमिद[मू]र्जितं वचः ॥४४॥

त्वां मुरारिरपि गौरवादहो याचतेऽतुलयशाः शचीपते !
चेत् तथापि न तनोपि मार्दवं तद्वयं सपदि वीतदूषणाः ॥४५॥

याचितो यदि मयापि पादपं देवराज ! न ददासि दर्पितः ।
तन्निधेहि विबुधाङ्गनावलत्पत्र[लोपि]नि करे निजायुधम् ॥४६॥

मामकीनगदया विदारिते वारणेन्द्रगुरुगण्डमण्डले ।
वास[रे]ऽपि निखिलै(36a)र्विलोक्यतां तारकोत्करकरम्बितं नभः ॥४७॥

एतदेव समुदीरितं मया यत्त्वया निखिलमेव [वि]द्यते ।
आर्यकार्यविदुषां भवादृशां नोपदेशदिशमीक्षते मनः । ४८॥

तन्ममाभिमतसिद्धयेऽधुना साधयन्तु सहसा भवादृशः ।
वर्ततां भवदभङ्गमङ्गलं शीघ्रमस्तु च पुनः समागमः ॥४९॥

इत्युदीर्य नयवीर्यसम्पदः सूचकं वचनमूर्जितं तदा ।
आननं सपदि मौनमुद्रया संयुयोज जगतामधीश्वरः ॥५०॥

भाषितामृतरसं मधुद्विषः सन्निपीय परिपूर्णमानसः ।
सादरः सरसिजासनात्मजो वाचमुज्ज्वल[म]तिस्तदावदत् ॥५१॥

श्रीपते ! तव निदेशलाभतो मानसं मम मुदा समावृतम् ।
यत्तथापि विनिवेदयाम्यहं सर्वथा तदवधेयमेव हि ॥५२॥

याचितो न कतिधा भवत्कृते स्वर्द्रुमं प्रति मयैव वासवः ।
सन्ददौ तदपि दर्पमाश्रितस्तत्प्र(36b)सूनमपि नैव कर्हिचित् ॥५३॥

सर्वलोकहृदयाधिवासिनः श्रीपते ! विदितमेव तेऽखिलम् ।
मन्यसे तदपि याचितं हितं वेद कोऽपि न तवेश ! मानसम् ॥५४॥

निर्भरैर्भुजभुजङ्गविक्रमैराक्रमे त्रिजगतोऽपि शक्तिमान् ।
त्वादृशोऽपि यदि याचते परं तत्प्रयातु कमयाचितव्रतम् ॥५५॥

याचितोऽपि मघवा मयोच्चकैर्दास्यति क्षितिरुहं न कर्हिचित ।
गम्यते तदपि देव ! न प्रभोर्भाषितं समुचितं हि लङ्घितुम् ॥५६॥

स्वस्ति तेऽस्तु सुखमास्यतां विभो ! तन्नभोगहनमुत्पताम्यहम् ।
सज्जतां नररथेभवाहिनी वाहिनी यदुपते ! तवोच्चकैः ॥५७॥

इत्युदीर्यवचनं महामना माधवाय वितरञ्छुभाशिषः ।
अम्बुजासनतनूद्भवस्तदा गन्तुमुत्सुकमतिर्मुदाऽभवत् ॥५८॥

सन्निवार्य शपथैरुदारधीरम्बुजाक्षमनुयान्तमादरात् ।
मानसं मुनिरुवाह दुःखितं कः सतां विरहतो (37a) न दूयते ॥५९॥

श्रीपतेर्गुणगणानुवादिनीमादरेण परिवादिनीं मुहुः ।
वादयन्मुदितमानसो मुनिः पर्वतेन सहितोऽथ निर्ययौ ॥६०॥

उल्लसन्मणिमयूखधारिणीं हारिनीरजविलोललोचनाम् ।
बिभ्रतीं कनककुम्भमम्भसां पूरितं पथि ददर्श नारदः ॥६१॥

स्पन्दमानमधिगम्य दक्षिणं लोचनं स्वकमकारणादपि ।
आशशंस विधिसम्भवस्तदा सन्निकृष्टगमभीष्टमात्मनः ॥६२॥

अर्चितो नगरवासिभिर्जनैरादरान्नयनपङ्कजस्रजा ।
कौतुकोत्तरलितः शनैः शनैर्नारदो नगरतोऽथ निर्ययौ ॥६३॥

गच्छतो विधिसुतस्य दूरतोऽप्यागतानि पतिताः प्रदक्षिणम् ।
मङ्गलानि श[कुना]नि सर्वतः कूजितैः शकुनयो वितेनिरे ॥६४॥

उल्लसत्फलभरानताश्चलच्चारुमारुतविलोलपल्लवाः ।
आदरादिव महीरुहास्तदा तं प्रसूननिकरैरवाकिरन् ॥६५॥

पल्वलेषु परिपीय पङ्कजस्यन्दमा[नमकरन्दमादरात्] ।
मन्दमन्दगतिना नभस्वता सेवितो मुनिरवाप संमदम् ॥६६॥

सारसारवविराजिताश्च सच्चक्रवाकचयचारुतां गताः ।
उल्लसन्न[लिन]रेणुरञ्जिता[ः] सन्निरीक्ष्य सरसीः स हर्षितः ॥६७॥

कापि माधवगुणान्मनोरमान् पर्वताय सुहृदे निवेदयन् ।
वर्त्म दूरमपि लङ्घितं जवान्मोदवान्नहि विवेद नारदः ॥६८॥

देवराजनगरीं गरीयसीं नन्दनन्दनान[दि]शतो व्रजन् ।
काननाचलसरस्तरङ्गिणीरुत्ततार तरसा स नारदः ॥६९॥

काप्यभ्रंलिहसौधशेखरमहीमध्यास्य विश्रान्तये
काप्यारुह्य रथानिवातिविततानम्भोधरानुच्चकैः ।
[रा]जन् कापि च भानुमानिव [निरा]लम्बे वियन्मण्डले
देवाधीशपुरं प्रति प्रमुदितो धातुस्तनूजो ययौ ॥७०॥

विविधनगरदेशग्रामशैलस्रवन्ती-
र्द्रुतमथ समतीत्य स्वीयसिद्धिप्रभावात् ।
कमलभवतनूजः पर्वतेनानुयातः
सपदि तुहिनशैलाभ्याशमभ्याससाद ॥७१॥

(38a) स्वान्तध्वान्तविधूननं प्रणमतां दीर्घादरं ध्यायता
धन्यं किञ्चन हृद्गतं नवजवासिन्दूरसान्द्रं महः ।
धीरश्रीकविकर्णपूरकृतिना कौतूहलान्निर्मिते
काव्ये चारुणि पारिजातहरणे सर्गस्तु षष्ठो ययौ ॥७२॥

———

## [ सप्तमः सर्गः ]

अथ कान्तिशतेन शोभमानं विधिसूनुस्तुहिनाचलं विलोक्य ।
हृदि मोदमुदारमादधानो विबुधाधीशपुरीं प्रति प्रतस्थे ॥१॥

क्वचिदुल्लसदिन्द्रनीलकान्त्या वलितानां वरहीरकावलीनाम् ।
स निरीक्ष्य रुचिं सुरस्रवन्तीयमुनासङ्गममोहमाबभार ॥२॥

क्वचिदिद्धसुधाकरानुकारा रुचिधारा शिखरात् समुल्लसन्ती ।
सममानि मुनीश्वरेण सद्यः सुरगङ्गेव नभोङ्गनात्पतन्ती ।३॥

क्वचिदुच्चरवैर्निनाद्यमानाः सरसैः सारसहंसचक्रवाकैः ।
सरसीः सरसोरुहाभिरामा मुनिरालोक्य मुदं तदा ततान ॥४॥

विलसद्घनराजिराजितानां रुचिमालोक्य मनोज्ञमेखलानाम् ।
अवलेपमधान्मु(34b)निस्तदानीमतिमात्रं नवनीरदोत्करेऽपि ॥५॥

अतिनूतनमालतीलतानां कुसुमान्युच्छ्रितभृङ्गसङ्गतानि ।
कमलासनसम्भवोऽवलोक्य स्फुटतारानिकरभ्रमं बभार ॥६॥

क्वचिदाकुलितान्मृगेन्द्रनादैर्भयविभ्रान्तविलोचनान्मुनीन्द्रः ।
हरिणानवलोक्य धावमानान् करुणाकोमलचित्तवृत्तिरासीत् ॥७॥

सरसीषु सरोरुहावलीनां मकरन्दासवमुच्चकैर्निपीय ।
मृदुना पवनेन सेव्यमानो मुदमुद्दामतमां मुनिः प्रपेदे ॥८॥

नखदारितदाड़िमीफलोद्यद्द्रवलोभेन मुहुः करं लिहन्तः ।
कपयो वलदङ्गभङ्गिभाजो विधिसूनोर्मुदमुत्तमां वितेनुः ॥६॥

सविकासपलाशभूरुहस्य स्तवकस्तेन तदा मुदा व्यलोकि ।
दहनाय मुहुर्वियोगभाजामुदितः कामशिखीव काननेषु ॥१०॥

नवकेसरकानने विकीर्णां कुसुमालीमवलोकयाञ्चकार ।
विषदिग्धमुखीमुदार(39a)मालां शरधारामिव मन्मथस्य राज्ञः ॥११॥

विलसद्विमलेन्द्रनीलकान्तीञ्जलदानत्यनुरागमाकलय्य ।
मदमेदुरमानसा मुनीन्द्रं शिखिनस्तं खलु तोपयाम्बभूवुः ॥१२॥

दधतोऽपि महोन्नति समन्तात् पवनान्दोलनलोलचारुशाखाः ।
कुसुमैस्तमवाकिरन्नशोका वलते कुत्र न मानमुन्नतानाम् ॥१३॥

विहगारवरम्यव[ा]ग्विलासो विलसत्पल्लवकल्पिताञ्जलिश्रीः ।
गिरिरानतवृक्षमौलिरुच्चैर्विधिसूनुं प्रणयादिव प्रणेमे ॥१४॥

क्वचिदुज्ज्वलितं हुतैर्हुताशै रुचिरं चारुतरोटजावलीभिः ।
मुमुदेऽतितरां विरिञ्चिसूनुर्यमिनामाश्रममण्डलं विलोक्य ॥१५॥

अतिनूतनभूरुहाननेकान् स्नपयन्तीः कलशाम्भसां समूहैः ।
नववल्कलवाससः समन्तान्मुनिकन्या स विलोक्य हर्षितोऽभूत् ॥१६॥

गुरुकार्यपरोऽपि पुण्यचित्तैर्विहितातिथ्यविधिस्तपोधनौघैः ।
क्षणमाश्रममण्डले स तस्थौ न महान्तो (39b)हि कदापि लङ्घनीयाः ॥१७॥

मरुतापहृता नभोऽन्तराले ददृशे तेन सरोजरेणुराजी ।
घनमानविमर्दनाय यूनोर्मदनस्येव चमूसमूहरेणुः ।१८॥

अपि कौतुकलक्ष्मीक्षमाणो न विलम्बं विधिसूनुरालम्बे ।
अकृतार्थितभर्तृशासनानां वलते क्वापि न धीमतां प्रमोदः ॥१९॥

गततृष्ण इवोत्सकैर्ममत्वं द्रुतमुत्तीर्य हिमाचलं विशालम् ।
कृतयोग इवाशु मोक्षलक्ष्मीं विधिसूनुर्दिविषत्पुरीमवाप ॥२०॥

अथ लोचनगोचरस्तदानीमभवद्देवपुरी विरिञ्चिसूनोः ।
अतिनिर्मलमुग्धसौधमालाविलसत्कान्तितरङ्गसङ्गतश्रीः ॥२१॥

द्युतिभिर्यदुदारमन्दिराणां परमालोक्य मयूखमेदुराणाम् ।
अरुणत्वमवाप यद् विवस्वानरुणस्तेन जनैर्निगद्यतेऽसौ ॥२२॥

किरणैर्वरहीरनिर्मितानां भवनानामनुवेलमुल्लसद्भिः ।
रुचिरत्वम[धा]दुदारकान्तिर्विहसन्तीव निरन्तरं जगन्ति ॥२३॥

वरहारलता(40a)वदातदेहैः स्फुटतारेव वराप्सरः समूहैः ।
रुचिवञ्चितवारिजातगर्वैर्बहुचन्द्रेव मुखैर्विलासिनीनाम् ।।२४।

कुलकम् ।

अथ देवपुरीमुदाररूपां तरसोत्कण्ठितमानसो विलोक्य ।
कमलासनसम्भवस्तदानीमिदमूचेऽनुगतेन पर्वतेन ।।२५।।

निजशिल्पकलाविलोकनोत्को भुवनान्यम्बुजसम्भवः ससर्ज ।
तदुपर्युचितां यशःपताकामिव देवेन्द्रपुरीमिमामकार्षीत् ।।२६।।

इह सौधशते निवेशितानां विशदानां शशिकान्तधोरणीनाम् ।
अधियामिनि कान्तयः समन्तादपि गङ्गाभ्रममावहन्ति नित्यम् ।।२७।।

अवलम्ब्य चिराय नर्महर्म्ये त्रिदशाः पार्वणशर्वरीशबिम्बम् ।
समतां दयितास्यमण्डलानामिह कौतूहलतो विलोकयन्ति ।।२८।।

पवनाः परितोऽपि कल्पवल्लीप्रसवामोदमुदारमुत्किरन्तः ।
श्लथयन्ति सदैव गाढबद्धामपि नीवीमिह कामिनीजनानाम् ।।२९।।

इह पश्य वयस्य ! कौ(40b)तुकानि स्फुटमालोक्य मुखं मृगेक्षणानाम् ।
रचयन्ति चिराय भङ्गृतानि प्रथयन्तो मुदमुत्तमां चकोराः ।।३०।।

मदमेदुरवारणेन्द्रदानप्रसरत्सौरभमुग्धमानसानाम् ।
पटलान्यलिनां नभोवकाशे ददते जङ्गमकुञ्जपुञ्जशङ्काम् ।।३१।।

परितः पुरवासिनो दिगीशा विटपी कल्पतरुः सरिच्च गङ्गा ।
अधिपः खलु यत्र वृत्रहन्ता कथमेषा वचसां च गोचरः स्यात् ।।३२।।

नियमैर्बहुभिस्तपोभिरुग्रैर्वसुसङ्घैरसुभिश्च मुच्यमानैः ।
यतते यदवाप्तुमत्र लोकस्तदिदं पत्तनमैन्द्रमुज्जिहीते ।।३३।।

स्मितमञ्जुमुखैः सखीसमूहैः सह केलीविपिनेषु सञ्चरन्ती ।
गजराजगतिर्विलोकितेन व्यथमानं युवचित्तमावनोति ।।३४।।

विलसद्घनमालयातिरम्यं कलितश्रि द्विजराजिसेव्यमानम् ।
दनुजारिशरीरवद्विनोदं तनुते नन्दनकाननं मदक्ष्णोः ॥३५॥

(41a) इति वादिनि पर्वते समन्तात् कुतुकोत्फुल्लविलोचनो मुनीन्द्रः ।
दुरवापमनर्जितोरुपुण्यैस्त्रिदशाधीशसदः समाससाद ॥३६॥

अव[ग]त्य समागतं मुनीन्द्रं वलदानन्दपयःप्रवाहपूरैः ।
जलयन्त्रनिभानि सन्दधानो नयनानि द्रुतमागमन्महेन्द्रः ॥३७॥

उपसृत्य विधेयकोविदोऽसौ प्रणनाम प्रसभं मुनिं महेन्द्रः ।
अथ तं च शुभाशिषां समूहैः स समन्तादभिनन्दयाम्बभूव ॥३८॥

अथ कारणमागमस्य वेत्तुं विधिसूनुः समवादि वासवेन ।
द्रुतमप्युपचक्रमे स वक्तुं नहि जल्पावसरे हिताय मौनम् ॥३९॥

विबुधेश ! निदेशहा[रका]णां परुषं चेदपि जायतेऽभिधानम् ।
क्षमणीयमिदं तदा महद्भिर्न हि सन्देशहरा मृषा वदन्ति ॥४०॥

चतुरश्चतुरब्धिमेखलायाः पतिरुर्व्याः प्रसरद्भुजप्रतापः ।
यदुवाच मुरान्तको (41b)[भवन्तं] तदुदन्तं श्रृणु शक्र ! सावधानः ॥४१॥

घनमानपिनद्धमानसायाः प्रणयिन्याः प्रसभं विनोदनाय ।
अचिरेण सुरद्रुमं प्रदातुं स्फुटमङ्गीकृतवानहं सभायाम् ॥४२॥

तदुदारमते ! नतैकचित्ते मयि देवेश ! दयोदयस्तवास्ताम् ।
यशसे सुकृतात्मनां प्रभूणां प्रणतेषु प्रणयादृते न पन्थाः ॥४३॥

किमदेयमुदेति पण्डितानां त्रिजगत्यामपि याचकाय जिष्णो ! ।
निजमस्थिचयं च याच्यमानो न दधीचिः किमदान्मुदा भवद्भ्यः ॥४४॥

किमवेक्ष्य फलं पयोधराली परितो यच्छति जीवनानि भूयः
परमानसपूरणाय नित्यं सरसानामघृणा हि हृद्विलासाः ॥४५॥

त्वयि निर्मलमानसेऽग्रजन्मन्यमराधी[श ! परि]स्फुरत्प्रतापे ।
न ममापि समीहितं यदि स्यात् कथमन्ये स्पृहयन्तु बान्धवेभ्यः ॥४६॥

(42a) विबुधेन्द्र ! विलोक्य लोकवृत्तं विशदं वीक्ष्य यशास्तथात्मनीनम् ।
करुणावरुणालयैर्भवद्भिर्विनिधेयो मयि पादपप्रसादः ॥४७॥

इदमाह मुरारिरत्युदारो विबुधाधीश ! भवन्तमादरेण ।
अथ यच्च भुजप्रतापदर्पादयमूचे तदपि स्फुटं वदामि ॥४८॥

विनयेन मयापि याच्यमानो यदि दर्पान्न ददासि पारिजातम् ।
असुरेन्द्रविमर्ददृष्टसारा तदुदाराशनिरर्प्यतां स्वपाणौ ॥४९॥

मखभङ्गभवापमाननायां यदभूः कोपकषायितस्त्वमुच्चैः ।
विदितो न जनैस्तदैव किं ते भुजयोरुग्रतरः पुरः प्रतापः ॥५०॥

विनयोज्ज्वलमुज्ज्वलं प्रतापैरिदमूचे सुरराज ! मां मुरारिः ।
निखिलं च मया निवेदितं ते सुमते ! कृत्यविधौ भवान् प्रमाणम् ॥५१॥

इति वादिनि हंसयानसूनौ प्रसरत्कोपभरारुणाननेन्दुः ।
(42b) घनशोणिमसम्भृतं तदानीमवहल्लोचनपद्मवृन्दमिन्द्रः ॥५२॥

अथ कोपमनर्गलं कथञ्चिन्मदमत्तेभमिव क्षणं निगृह्य ।
सृणिनेव नयेन गर्वगर्भं विबुधेशो विधिसूनुमाबभाषे ॥५३॥

विनयोल्लसितापि वाङ् मुरारेः परुषत्वं समुपैत्यहङ्कृतेन ।
विशदाम्बुरपि स्फुटं स्रवन्ती भजते भीषणतां हि नक्रचक्रैः ॥५४॥

प्रणयेन यदाह मां मुकुन्दस्तदशेषं खलु मे विधेयमेव ।
परमस्य वचोभिरत्युदग्रैः कठिनत्वं समुपैति मानसं नः ॥५५॥

प्रथयन् बहिरार्जवं समन्तान्मलिनं सन्ततमन्तरादधानः ।
मधुदिग्धमुखो विषावसक्तः पिशुनः कुम्भ इवानिशं विशङ्क्यः ॥५६॥

प्रणयाद्यदि याचते मुकुन्दस्तदलं तस्य समुद्धतैर्वचोभिः ।
अथ शक्तिरुदेति चेत्तदानीं विफलं याचनयानयाच्युतस्य ॥५७॥

उदयं समवाप्य मूढचेता महतां न्यक्कृतिमु(43a)च्चकैः करोति ।
स्पृशति प्रसभं समुज्जिहानो निजपादैरपि कं न वा मृगाङ्कः ॥५८॥

गिरिराजसुतापि यत्प्रसूनं लभते याचनया चिरात्कथञ्चित् ।
तमसौ तरुमीहतेऽपहर्तुं किमसाध्यं समुदेति धृष्टतायाः ॥५६॥

तनुते निजगौरवं मुकुन्दो विविधानुग्रहलालितो मयैव ।
बत विस्मरति स्म तुच्छचेताः श्रियमासाद्य नितान्तमात्मनोऽपि ॥६०॥

वद नारद ! मद्गिरा मुरारिं स्वयमायातु स योद्धुमुद्धतश्रीः ।
ज्वलिते मम वज्रवाडवाग्नौ नरवीराः शलभा भवन्तु सर्वे ॥६१॥

आगत्याभिमुखं कथञ्चिदपि मे सन्नद्धसैन्यो भयात्
त्वं गन्तासि न चेन्ममाशनिघनज्वालावलोकाकुलः ।
सन्दास्यन्ति तदासुरेभदलनव्यापारपञ्चानना
गर्वाखर्वसुपर्वयोधनिवहाः कोदण्डदण्डे दृशः ॥६२॥

निगदितमनुरूपं शौर्यधैर्योच्चलक्ष्म्याः
स(43b)पदि कुलिशपाणेः सम्मदादाकलय्य ।
समुचितमिदमुच्चैस्त्वादृशस्येति जल्प-
न्मुनिरपि बहु मेने मौलिनान्दोलितेन ॥६३॥

अथ कथमपि रम्यैर्वाग्विलासैस्तदानीं
सुरपतिमनुयान्तं सन्निवार्योरु[शातः] ।
अतनुतनुमयूखैर्द्योतयन् दिग्विभागा-
नलभत विधिसूनुः सन्निधिं माधवस्य ॥६४॥

युद्धालोकरसा[त्] परस्परमहादुर्वारवैरानलं
वाग्व्यापारसमीरणैरुरुतरैरुद्दाममुद्दीपयन् ।
ऊचे सर्वमनुक्रमेण स मुनिः कंसद्विष सन्निधौ
को वात्मीयसमीहितोदयविधौ नानन्दमाविन्दति ॥६५॥

स्वान्तध्वान्तविधूननं प्रणमतां दीर्घादरं ध्यायता
धन्यं किञ्चन हृद्गतं नवजवासिन्दूरसान्द्रं महः ।
धीरश्रीकविकर्णपूरकृतिना कौतूहलान्निर्मिते
काव्ये चारुणि पारिजातहरणे सर्गोऽगमत्सप्तमः ॥६६॥

—०—

## [ अष्टमः सर्गः ]

आकर्ण्य कर्णविरसानि विरिञ्चिसूनो-
राास्यान्मुहुर्निगदितानि पुर(44a)न्दरस्य ।
रोषारुणस्त्रिदशराजतरुं हठेन
हर्तुं तदा मतिमधान्मधुसूदनोऽ[पि] ॥१॥

संमन्त्र्य मन्त्रनिपुणैरथ मन्त्रिमुख्यैः
कार्यं विचार्य च मुहुर्मुहुरात्मबुद्धया ।
सम्पूर्णशक्तिरनुरक्तसमस्तलोकः
प्रस्थानमेव मुरजिद्विजयाय मेने ॥२॥

गम्या सुराधिपपुरी वियति प्रचारो
हार्यस्तरुर्दिविषदां बलभिद्विजेयः ।
सोल्लासमास तदपीह मनो मुरारेः
पारे गिरां जयति साहसिनां हि तेजः ॥३॥

उद्दीप्तचारुकनकासनसन्निविष्टो
हृष्टो वलन्मधुरहासलसन्मुखेन्दुः ।
गन्तुं सुराधिपपुरीं परिपूर्णकामो
दामोदरो निजबलानि समादिदेश ॥४॥

आज्ञामवाप्य महतीं मधुसूदनस्य
सेनापतिर्मधुरवाक् प्रसरत्प्रतापः ।
आनन्दतुन्दिलमनाः पृतनां तदैव
सज्जीचकार नरनागरथाश्वपूर्णाम् ॥५॥

आकर्ण्य दुन्दुभिरवं तरसा मुरारे-
र्यावन्निदेशयति सैन्यपतिः समन्तात् ।
उद्वेलितोदधिसमः किल तावदेव
संव्यानशे दश दिशोऽपि चमूसमूहः ॥६॥

रिङ्गत्तुरङ्गचयचारुचलत्पदाति
गर्जद्गजावलि वलद्रथयूथमुच्चैः ।
आलोक(44b)यन् बलमनर्गलमुद्गतश्री-
र्मेने हरिः करगतं किल पारिजातम् ॥७॥

उद्भासितः स्फुरदमन्दतनुप्रभाभि-
रालोकितस्मितरसैरमृतोपमानैः ।
तां वाहिनीं कुमुदिनीमिव रम्यरूपा-
माह्लादयन् हरिरमानि जनैः कलावान् ॥८॥

अत्रान्तरे चतुरगैस्तुरगैरुपेतः
केतुस्फुरद्विहगराजिविराजमानः ।
सज्जो जगद्विजयसिद्धिरिव न्यवेदि
कंसद्विषे रथवरः किल दारुकेण ॥९॥

उन्मीलदिन्दुकरचारुशरीरशोभै-
र्वेगाधरीकृतसमीररयैरुदारैः ।
[गर्ज]द्भिरभ्रवनसङ्गरसेन सम्यग्
विभ्राजमानमतितुङ्गतरैस्तुरङ्गैः ॥१०॥

दीर्घादरादधिगतेन शिखण्डिवर्गैः
कल्पान्तमेघरवकोटिसमुत्कटेन ।
उद्दामचक्रनिनदेन विदीर्यमाण-
मन्तः सदा विरचयन्तमरिव्रजानाम् ॥११॥

वित्रासितारिनिवहेन महोग्रवेग-
प्राग्भारकम्पितसमस्तकुलाचलेन ।
उज्जृम्भमाणरुचिरध्वजवंशमुच्चै-
र्विभ्राजमानमहसा पतगाधिपेन ॥१२॥

रिङ्गत्तुरङ्गनिखिलाङ्गनिवेशितस्य
श्रीमन्महामणिगणस्य [महोच्च](45a)भासः ।

अत्यन्तमुल्लसितकान्तिशतैः समन्ता-
न्मार्तण्डमण्डलमिवोज्ज्वलमुज्जिहानम् ॥१३॥
दर्पं सविग्रहमिवोरुतरैस्तुरङ्गै-
र्मूर्तं जगज्जयमिवायुधधोरणीभिः ।
आलोक्य तं रथमतिस्फुरदाननेन्दु-
रानन्दतुन्दिलमना मधुसूदनोऽभूत् ॥१४॥
कुलकम् ।

आबद्धतीक्ष्णतरवारिरुदग्ररूपः
श्रीमान् महोज्ज्वलशरासनमादधानः ।
विन्यस्य दारुककरे करमेकमुच्चैः
सोल्लासमाशु मुरजिद्रथमारुरोह ॥१५॥

आरोहति प्रसभमेव रथं रथाङ्ग-
पाणौ वलद्विनयनम्रशरीरभाजः ।
ह्रेषारवैर्मुदिरमेदुरनादसान्द्रै-
र्वाहा महाविजयमङ्गलमाश[शं]सुः ॥१६॥

आरुह्य निर्मलमणिव्रजराजमान-
मत्युच्छ्रितं रथमुदारमपारतेजाः ।
चामीकराचलशिरः समुपाश्रितस्य
चण्डद्युतेरपि निनिन्द रुचं मुकुन्दः ॥१७॥

आकृष्टरश्मिरपि [मांसलवेगदर्पाद्
वलात्खुरे]क्षणमनुक्षणमाव्रज[न्ती] ।
हर्षोदयादिव सुरेशजयाय तेने
वाहावली मुरहरस्य पुरः प्रयाणम् ॥१८॥

आत्तायुधान् प्रमनसः प्रसरत्प्रतापा-
नुग्रत्विषः प्रबलवीर(45b)[वरान् विधेयान् ।
आरोहणाय धुरि सज्जितवाहनानां]
भ्रूसंज्ञया मुररिपुः स्फुटमादिदेश ॥१९॥

उद्यन्मनोरममणिव्रजराजमाना-
नत्युच्छ्रितान् प्रबलदर्पभृतः प्रवीराः ।
पञ्चाननाः क्षितिधरानिव साव[धाना
दन्तावलान्] त्वरितमारुरुहुः प्लुतेन ॥२०॥

वल्गायुतान् सरभसं विनिधाय हस्तान्
ग्रीवासु गाढमतिचञ्चलतामुपेतान् ।
शान्तान् कथञ्चिदनुलालनया तुरङ्गान्
सोल्लासमारुरुहुरुग्ररुचोऽश्ववाराः ॥२१॥

आरोहणावसर एव कृतप्लुतोऽपि
वाहस्तदा झटिति केनचिदध्यरोहि ।
तत्कौशलं सपदि संप्रशशंसुरन्ये
मन्ये गुणे महति नैव यशो दुरापम् ॥२२॥

संवेशितोऽपि चिरलालनया कथञ्चि-
न्निस्पन्दकर्णयुगलः समुदग्रमौलिः ।
वेगादुपेत्य पदघातभिया प्लुतेन
दुष्टो गजः सपदि केनचिदध्यरोहि ॥२३॥

आरुह्य कश्चन करेणुमथ प्लुतेन
द्रागारुरोह मदमत्तमपि द्विपेन्द्रम् ।
हीनः स्वशक्तिविभवैरपि सत्सहाय-
मासाद्य साधयति को न सुखादभीष्टम् ॥२४॥

प्रासोल्लसत्करतलाः स्फुरदुग्रभास-
स्तुङ्गा [1]..................॥२५॥

---

1 Folios 46—48 covering portions of cantos VIII and IX are lost.

## [ नवमः सर्गः ]

(49a)[अथाश्लथोत्साहचलद्वरूथिनी-
गजाश्वपत्तिध्वनिभि]र्निनादितः ।
व्यलोकि लोकत्रितयैकमण्डनं
मुरारिणा वर्त्मनि काञ्चनाचलः ॥१॥

रणोद्धुरासु ध्वजिनीषु शार्ङ्गिणो
निशम्य माद्यद्गजगर्जमूर्जितम् ।
द्रुतं समुन्मुच्य निजान् गुहागृहा-
नखर्वगर्वा हरयो विदुद्रुवुः ॥२॥

क्वचिन्महापादपपल्लवावली-
निषक्तहस्तान् समुदञ्चिताननान् ।
निहत्य गाढं सृणिभिर्निषादिन-
श्चिरेण निन्यु[र्न]दतो मतङ्गजान् ॥३॥

वनद्विपानां मदगन्धमुल्बणं
हठादुपालभ्य रुषा प्रधावतः ।
शिताङ्कुशाघातशतैर्महागजान्
निषादिनः संरुरुधुः कथञ्चन ॥४॥

खुरैरुदारैर्दलितापि वाजिनां
गिरेर्विरेजे वरविद्रुमस्थली ।
स एव धन्यः सहजो गुणो न यः
पराभिभूतोऽपि बिभर्ति विक्रियाम् ॥५॥

समुच्छ्रितं सानुगणं महागिरे-
रुदञ्चितोर्ध्वाङ्गभृतश्चलाननाः ।
विना समुत्तेजनमप्यधीशितु-
र्द्रुतं जवादारुरुहुस्तुरङ्गमाः ॥६॥

पदातिपादाभिहतस्य यद्रजो
गिरेस्तदा गैरिकरक्तमुत्थितम् ।
विलिप्तदेहः किल तेन भानुमान्
सदैव लोकैररुणो निगद्यते ॥७॥

क्वचिन्महोच्चानि शिरांसि भूभृतो
द्रुतं [व्रज]न्ती हयराजिरुज्ज्वला ।
अमानि सिद्धैरधिकादरा(49b)दसौ
नभःपतन्तीव नदी दिवौकसः ॥८॥

महीभृतः शृङ्गशतान्युपेयुषां
मुहुर्भटानां मुकुटालिमुज्ज्वलाम् ।
विलोक्य साशङ्कमुदञ्चितेक्षणै-
रधारि तारामतिरञ्जसा जनैः ॥९॥

प्रतिप्रसूनप्रसरन्मधुद्रवा
विहाय वल्लीरपि चारुसौरभाः ।
निपेतुरानन्दभृतो मधुव्रताः
कटेषु सन्नद्धमदेषु दन्तिनाम् ॥१०॥

क्वचिल्लतानां कुसुमैर्विभूषितो
महागजः पेचकमेचकच्छविः ।
उदारतारानिकरैः करम्बितो
रराज जीमूत इवोत्तमद्युतिः ॥११॥

भरं वहन्तोऽपि महान्तमुच्चकै-
र्जवेन जग्मुर्बलदर्पिणो वृषाः ।
समुत्कटे कार्यविधावपि स्फुटं
न कुण्ठितं मानसमुग्रतेजसाम् ॥१२॥

श्रमोल्लसत्फेनमुखेषु निर्भर-
प्रवृद्धनिःश्वासविशुष्कतालुषु ।

गतेषु मान्द्यं महिषेषु वर्त्मनि
त्वरावरोधाश्चुकुपुर्भृशं जनाः ॥१३॥

विदूरिताशेषनरे समन्ततः
पथि व्रजन्त्यः करिणीरधिश्रिताः ।
विलोकयन्त्यो रुचिरं महीधरं
नरेन्द्रदारा [मु]दमुत्तमां दधुः ॥१४॥

निवार्यमाणोऽपि रुषारुणेक्षणैः
कशाकरैः कञ्चुकिभिर्जनव्रजः ।
पलायमानोऽपि विवर्तिता(50a)ननं
विलोकयामास मुहुर्नृपाङ्गनाः ॥१५॥

नृपाङ्गनाग्रेसरकञ्चुकिव्रज-
प्रहारभीत्या द्रुतगामिनो जनाः ।
विलोकयन्तोऽथ पुरो मदद्विपं
विहाय वर्त्मापि वनान्तराविशन् ॥१६॥

क्वचित्समुन्मूलितपाद[पो द्वि]पैः
क्वचित्समारुढशिराः पदातिभिः ।
क्वचित् समाकृष्टमणिव्रजो जनै-
र्द्विषद्दशामाप हरेर्बलाद्गिरिः ॥१७॥

अधिष्ठितः केशवसैन्यराजिभि-
र्भयादिव व्याकुलपत्रिनादवान् ।
समुन्नयन्निर्झरघर्ममुच्चकै-
र्मुहुर्मुहुः कम्पमवाप पर्वतः ॥१८॥

पदातिपादाहति[मर्दितौ]षधी-
रसप्रवाहानवहन्महीधरः ।
मुरारिमातङ्गभराभिघातज-
व्रणव्यथाशान्तिमुपानयन्निव ॥१९॥

दलावनद्धाञ्जलयो मुहुर्मुहुः
प्रसूनवर्षं रचयन्त उच्चकैः ।
समीरणासङ्गविनम्रमौलयः
प्रणेमुरेनं प्रणयादिव द्रुमाः ॥२०॥

उदश्रुरुद्भासितनिर्झराम्भसा
समुल्लसन्निर्मलकाशहासभृत् ।
समन्ततश्चारुविहङ्गभाषितै-
र्मुदेव पप्रच्छ हरिं महीधरः ॥२१॥

रणोद्धुराभिर्ध्वजिनीभिरन्वितः
परिस्फुरद्दर्पहरः सुरद्विषाम् ।
प्रकाशयन् भानुरिव (50b) स्वतेजसा
सुवर्णशैलं मुदमाप माधवः ॥२२॥

अथामृतोद्यद्द्रवदीर्घिकादृशो-
र्जगन्मनस्तोषणसिद्धिरुद्धता ।
स्फुरन्महापातकपादपाशनि-
र्व्यलोकि लोकैर्दिविषत्तरङ्गिणी ॥२३॥

निषेव्यमाणा विमलैर्द्विजव्रजै-
र्विशुद्धवर्णा शमिनी महैनसाम् ।
पवित्रयन्ती सततं जगत्त्रयीं
त्रयीव पुण्या द्रवतामुपागता ॥२४॥

पयोभिरुद्भासिसुधारसोपमै-
र्विवर्द्धयन्ती सततं जगत्त्रयीम् ।
अनन्तसन्तापसमृद्धिनाशिनी
महोदयं या जननीव यच्छति ॥२५॥

तिमिङ्गिलास्फालसमुत्थितैर्मुहु-
र्विभूषिता नित्यमुदारशीकरैः ।

समर्च्यमानेव सुरैर्दृढादरा-
दिवश्च्युतैर्निर्मलमल्लिकाशतैः ।।२६।।

निजेन नैर्मल्यमदेन निर्भरं
प्रकाशयन्ती मुखपङ्कजं मुहुः ।
समुल्लसत्फेनपरंपरामिषात्
सदा हसन्तीव शरत्सुधा[निधिम्] ।।२७।।

परिस्फुरच्चारुदलान्तरुल्लस-
त्प्रवालवल्लीनिकरच्छलान्मुहुः ।
अजस्रसञ्चारनिकारशान्तये
निषेव्यमा[णे]व सहस्रभानुना ।।२८।।

क्वचिन्मनोहारिहरिन्म(51a)णिव्रज-
स्फुरन्मरीचिप्रकरैः करम्बिता ।
निरीक्ष[माणे]क्षणसौख्यदायिनी
दिवाकरस्यात्मजयेव सङ्गता ।।२९।।

समुद्यदिन्दीवरचारुसौरभै-
र्मनोरमैर्विद्रुमदीपमण्डलैः ।
तटोल्लसन्निर्मलकाशचामरै-
रुपास्यमानेव दिवानिशं द्विजैः ।।३०।।

वियन्मनोहारिमरालमण्डली
महीमहामण्डलमौक्तिकावली ।
भुजङ्गमावासविलासदीर्घिका
जगन्महामोहतमःप्रदीपिका ।।३१।।

पयोभिरुद्यद्विषवेगसम्भृतै-
रुदारफूत्कारपराहतैरपि ।
निवेदयन्ती भुजगं जलस्थितं
कुचेष्टितेनेव मलीमसं मनः ।।३२।।

-समीरसंसर्गविशेषसञ्चर-
त्पयःपरीवर्तविवर्तिताम्बुजा ।
विलोकितुं माधवमुद्गतद्युतिं
मुहुः परावृत्तमुखीव कौतुकात् ॥३३॥

उदारवर्णा सुगुणैरलंकृता
महोज्ज्वलोदाररसेन रञ्जिता ।
विनोदयन्ती हृदयं वलद्ध्वनि-
र्महाकवेर्भव्यतरेव भारती ॥३४॥
कुलकम् ।

मनोनुकूलामतिनिर्मलोदकां
विकासिभिः पद्मवनैर्विराजिताम् ।
विलोक्य तां नेत्रमनोविनोदिनीं
द्रुतं स संमोदमुदारमाप्तवान् ॥३५॥

(51b) स्फुरन्मनोहारिसरोरुहावली-
वि[धून]यञ्छीकरसङ्गशीतलः ।
सुरस्रवन्त्येव मुदोपढौकितः
प्रभञ्जनः स्वान्तमतोषयद् [भृशम्] ॥३६॥

अथावतीर्याशु रथाद्विदूरतो
विवर्धमानाधिकभक्तिभावितः ।
ननाम लोकत्रितयैकपावनीं
विनीतमूर्तिर्मुरजित् सुरापगाम् ॥३७॥

समागता शीघ्रतया वलद्ध्वनि-
र्महोग्रवेगापि मुरारिवाहिनी ।
बभार मान्द्यं त्रिदशापगान्तिके
कराः खरांशोरिव विन्ध्यमूर्द्धनि ॥३८॥

मुहुः कशाघातशतैस्तुरङ्गमान्
प्रवर्तयन्तः सलिलेषु सादिनः ।
द्रुतं समुत्तेरुरुदाररंहसो
महौजसां क्वापि न कुण्ठितं मनः ॥३९॥

नियोजितोऽपि प्रबलेन सादिना
मुहुर्मुहुस्तीरमगात्तुरङ्गमः ।
विनीयमानोऽपि खलः सुबुद्धिना
जहाति न क्वापि कदापि वक्रताम् ॥४०॥

दृढामुदारां गुणराजिराजितां
समाश्रिताः केचन नावमञ्जसा ।
कृपामिवासाद्य विभोर्भवार्णवं
सुखेन तेरुर्दिविषत्तरङ्गिणीम् ॥४१॥

स्फुरन्महादुर्वहदेहभारतो
निमज्जतो वारिणि वेगवत्तरे ।
प्रवृद्धफूत्कारकरैः करैर्गजा-
नलङ्घयन् सन्तरतस्तट(52a)स्थिताः ॥४२॥

सुरापगावारिणि वेगभङ्गुरे
समुत्प्लवन्तो वृषभाः सहस्रशः ।
सुनीतिभाजो विपदीव भूभुजः
कथञ्चिदुत्थानमवापुराकुलाः ॥४३॥

अधिष्ठिताः प्राणसमैः प्रियाजनै-
र्न यावदापुस्तरयस्तटस्थलीम् ।
उदञ्चिताक्षः किल तावदुच्चकै-
र्दधार शङ्कां सुजनो निरन्तरम् ॥४४॥

निषिद्धयमानोऽपि करेण सन्तर-
न्कूर्मोदयाद्वारिणि कोऽपि संश्लथः ।

समुद्धृतोऽपि [स्वजनैः कृतत्वरै-
रुदञ्चयामास भृशानतं शिरः ॥४५॥

मुरद्विषस्तुङ्गतुरङ्गधोरणी-
मदान्धगन्धद्विपसङ्गसंग[ता] ।
सुरापगा धीरतरङ्गकम्पिनी
भियेव भेजे कलुषत्वमुच्चकैः ॥४६॥

अनीकिनीभिः [परि]वारितोऽभितो
द्रुतं समुत्तीर्य तरङ्गिणी दिवः ।
मनोरमे मेरुशिरस्युदारधी-
र्बलं निवासाय दिदेश केशवः ॥४७॥

अभीप्सितां वासमहीमनुत्तमां
जवादहंपूर्विकया प्रधावताम् ।
हरेर्भटानां परमोत्कटत्विषां
त्वराविरासीन्महती समन्ततः ॥४८॥

हिरण्मयस्तम्भशतेषु सम्भृता-
श्चिरं विरेजुः पटमन्दिरव्रजाः ।
समुद्गता मेरुशिरःसु शा( 2b)रदाः
सितांशुबिम्बा इव निर्मलत्विषः ॥४९॥

वितन्यमानैः पटमन्दिरव्रजै-
र्नियम्यमानैस्तुरगैर्गजैरपि ।
प्रसार्यमाणैर्विविधापणोत्करै-
र्मुरद्विषः सा शुशुभे वरूथिनी ॥५०॥

अथोपवेश्य प्रसभं करेणुकां
करावलम्बैरवतार्य सादरम् ।
विदूरयन्तोऽथ नरान् स्वमन्दिरा-
नजीगमन् कञ्चुकिनो नृपाङ्गनाः ॥५१॥

विहाय तल्पान्यपि संस्थिताः सुखा-
दुदारदूर्वादलकोमलस्थले ।
उदञ्चयन्त्यः पटवेश्म सस्पृहं
समीरणासङ्गमवापुरङ्गनाः ॥५२॥

बलेन विद्राव्य हरीन् मदोद्धतान्
प्रसक्तमुक्ताफलपूरपूरिताः ।
मनोरमोद्दामलतासमावृता
[गिरेर्]गुहा भूमिभुजः समाश्रिताः ॥५३॥

निषेव्य शीतं सलिलं समुत्थितान्
मुहुस्तटाघातसुखोपबृंहितान् ।
वितर्प्य दीर्घद्रुमसंगतान् गजान्
सदन्नपानैस्तुतुषुर्निषादिनः ॥५४॥

निवासहेतोरपि कल्पितं स्थलं
ददुर्भटा विश्रमणाय वाजिनाम् ।
विलोकयन्ति स्वशरीरतोऽधिकं
यशस्करं साधनमेव साधवः ॥५५॥

अथोपवेश्याशु विमोचयन् गुणा-
न्बिभर्ति गोणीं न हि यावदीशिता ।
[दुरु]त्थि(53a)तस्तावदधावदुष्ट्रको
दधाति किं स्थैर्यगुणं गुणोज्झितः ॥५६॥

क्वचित् समाकल्पितपाकमुच्चकैः
क्वचित् समारब्धमनोज्ञताण्डवम् ।
क्वचित् समासादितवल्पकल्पनं
चिरं विरेजे बलमुद्धतं हरेः ॥५७॥

फलैर्विशालैरतिनिर्मलैर्जलैः
समुल्लसत्पल्लवसंस्थितैरपि ।

स्फुरन्मनोहारिमणिप्रदीपकै-
महीभृतातिथ्यमकारि सर्वतः ॥५८॥

वृन्दावसक्तवरभूषणभूषितेन
शृङ्गार्पितप्रचुरवस्त्रगृहोज्ज्वलेन ।
अभ्यागते मुररिपावचलेन लक्ष्मी-
रुच्चैरवापि किमुदेति न सत्सकाशात् ॥५६॥

मत्तेभव्रजगर्जितैरुपचितैर्हेषारवैर्वाजिना-
मुद्यन्मङ्गलसन्मृदङ्गनिनदैरुष्ट्रावलीनर्दितैः ।
गङ्गावारिविराजिताश्रुरकरोदाक्रन्दमत्युच्चकैः
श्रीभर्तुर्बलभारभङ्गुरतनुर्दुःखादिव क्ष्माधरः ॥६०॥

श्रीरु[द्दा]तमा मनोरममहारत्नप्रदीपावली
पीयूषद्रवदर्पहारि सलिलं लोला लतामण्डपाः ।
आया[ते]ऽन्तिकमुज्ज्वले यदुपतौ जग्मुर्गिरेः सार्थतां
यत्राभ्येति महाजनस्त्रिभुवने तद्धन्यमन्यद् वृथा ॥६१॥

स्वान्तध्वान्तविधूननं प्रणमतां दीर्घादरं ध्यायता
(ꞌ b) धन्यं किञ्चन हृद्गतं नवजवासिन्दूरसान्द्रं महः ।
धीरश्रीकविकर्णपूरकृतिना कौतूहलान्निर्मिते
काव्ये चारुणि पारिजातहरणे सर्गोऽङ्कसंख्यो गतः ॥६२॥

—०—

## [ दशमः सर्गः ]

अथ हरिः परितः परिवारितः
सहचरैरमरैरिव वासवः ।
कनकशैलमुदै[क्ष]त कौतुकी
सुरुचिरं रुचिरञ्जितपादपम् ॥१॥

नवतमालविशालतरत्विषां
ललितनिर्मलनीलमहात्मनाम् ।

स्फुरितकान्तिकदम्बकडम्बरैः
सततमसं तमसंख्यलतावृतम् ॥२॥

नखविदारणकारणतोऽभितो
भयमुदारतरं दधुरुच्चकैः ।
प्रतिदिनं खलु यत्र मृगेन्द्रतो
मदयुतादयुतान्यपि दन्तिनाम् ॥३॥

सुरतकेलिषु यत्र समुल्लस-
द्गुरुपरिश्रमखिन्नहृदां मदा ।
अपहृता पवनेन लतागृहे
विलसताऽलसता सुरसुभ्रुवाम् ॥४॥

नवहरिन्मणिमेदुरकान्तिम-
द्घनदलावलिसंपिहिताम्बरैः ।
सततमेव लतानिकरैर्वरै-
र्ललितनीलितनीपवनावृतम् ॥५॥

निबिडपल्लवराजितिरोहित-
द्युमणितापमुदार[ल]ताशतम् ।
दधतमुद्धतपुष्पभरैर्मनो-
हरतमं रतमन्दिरसन्निभम् ॥६॥

अति[विजृम्भितपी](?)नमणिव्रज—
स्फुरितकान्तिभरेण विसर्पता ।
भवति वासर एव चिराय यो
घनतमोनतमोहविवर्धनः ॥७॥

शशिकराचितशीतकरोपल-
द्रवदमन्दपयःस्नपिता सदा ।
वहति यत्र कदाचिदपि स्फुर-
द्वनलता[ऽनलताप]कथामपि ॥८॥

रुचिरहीरकराजिविराजिते
शिरसि यस्य महोज्ज्वलतां ग[ते] ।
समुदितोऽपि विधुर्न विभाव्यते
सकलया कलयापि समन्वितः ॥९॥

सुरभिसुन्दरकुन्दलतावल-
त्कुसुमसङ्गतभृङ्गनिनादितम् ।
चकितचारुचमूरुचयाचितं
सुविपिनं विपिनद्धमहीरुहम् ॥१०॥

शिखिगणेन मनोरमकेकया
मदयता हृदयान्यपि योगिनाम् ।
प्रतिपलं किल यत्र निषेव्यते
घनवनी नवनीरदमेघया ॥११॥

सुरभिशीततमेन नभस्वता
मृदुलयापि च पल्लवशय्यया ।
वपुषि येन चिराय निधीयते
रुचिरता चिरतापभृतामपि ॥१२॥

दलितमत्तमतङ्गजशोणित-
प्रकरपूर्णमृगेन्द्रनखद्युतिः ।
दिशति यत्र पलाशमहीरुहां
मुकुलताऽऽकुलतां गजमानसे ॥१३॥

मसृणमञ्जुहरिन्मणिमेदुर-
स्थलपरिस्खलदंघ्रिचयान् मृगान् ।
(54b) दधति यत्र सुखेन तरुद्रवो
द्रुततया ततयापि समुन्नतान् ॥१४॥

आदिकुलकप

अथ पृथातनयो विनयोज्ज्वलो
नगविलोकिनमाह मुरद्विषम् ।
विमलयन् गगनं हसितामृतो-
ल्लसितया सितया दशनश्रिया ॥१५॥

इह नवोद्गतशोणमणित्विषां
ततिषु संवलिताः खलु भास्वतः ।
दधति निष्कलतां रुचिराजयो
हरिपुरो रिपुरोपचया इव ॥१६॥

ललितपल्लविताखिलपादपे
मृदुचलन्मलयानिलशोभिनि ।
सततमत्र समुद्यति माधवे
वलति का लतिका न घनद्युतिः ॥१७॥

इममुदारतरं मुदमुत्तमां
विरचयन्तमवाप्य महीधरम् ।
अभिलषन्ति कदापि हृदाप्यहो
न विबुधा विबुधालयसंस्थितिम् ॥१८॥

ललितगीतिषु तालविलासत-
श्चलितबाहुमृणालसमुद्गतैः ।
इह पतत्रिकुलानि चलीकृता-
न्यबलया वलयावलिशिञ्जितैः ॥१९॥

ज्वलदमन्ददिनेशमणिद्युति-
स्नपितशाखमवेत्य महीरुहम् ।
इह वहन्ति भयानि पतत्रिणो
भुजगराजगरानलशङ्कया ॥२०॥

इति विलोकय कौतुकमुच्चकै-
रनुसरञ्छनकैरिह शौनिकः ।

समधिगत्य वना(55a)न्तलतान्तरे
  शशवरं शबरः समुदीक्षते ॥२१॥

मृदुमनोज्ञलतावरमन्दिरे
  मलयमारुतसङ्गमशीतले ।
प्रणयिनीमिह मानविनोदिनीं
  सविनयं विनयन्ति विलासिनः ॥२२॥

सुरतकेलिकलासु कलावती
  ललितहासरसादिभिरुच्चकैः ।
मुदमुदञ्चयतीह सदा स्मरो-
  द्धुरतरा रतरागिणि वल्लभे ॥२३॥

अयमुदारतरो गिरिरुच्चकैः
  सरससारसनादितयानिशम् ।
वहति मेखलया द्युतिमुत्तमां
  घनवितानवितायितशोभया ॥२४॥

हरिमिवोल्लसितं वनमालया
  हरमिवोदितभूतिविभूषितम् ।
श्रयति सौख्यममुं जनता श्रिता
  विकलिता कलितापशतैरपि ॥२५॥

दयितयानुगतेन विलासिना
  ललितरङ्गतरङ्गवतानिशम् ।
सुरगणेन मुदैष निषेव्यते
  समदनो मदनोदितचेतसा ॥२६॥

मृगदृशामपराधपरायणे
  प्रिय[त]मे बत कोपकथामपि ।
अपनयन्ति रुतैरिह कोकिलाः
  किल रसालरसादनदर्पिताः ॥२७॥

इह समुच्छ्रितशृङ्गपरम्परा
विकटसङ्कटकोटिषु भास्वतः ।
वहति हन्त रथं कथमप्यसौ
चतुरगा तुरगावलिरन्वहम् ।।२८।।

विहरदम्भसि पल्वलसम्भवे
चलदपि स्थलनिर्मल(55b)वर्त्मिग ।
चपलचिल्लकपातविशङ्कितं
विकुलमाकुलमाशु निलीयते ।।२९।।

द्युमणितप्ततनुः करशीकरैः
सततमेव शिशुं परिषिञ्चती ।
गजवधूरिह वारिणि वीक्ष्यते
सकलभा कलभार्पिणि सारसे ।।३०।।

मुखरकिङ्किणिकारवबोधित-
श्चकितचारुविलोलविलोचनः ।
रुचिमयं रथमाकुलमीक्षते
मृगगणो गगनोदरगं रवेः ।।३१।।

नवहरिन्मणिकान्तिकरम्बिते
निवसतां वरकन्दरसीमनि ।
समुदितोऽपि च पेचकपक्षिणां
दिनकरो न करोति मनोभयम् ।।३२।।

इह मनोज्ञतमेन नभस्वता
शबरराजवधूरनुरञ्ज्यते ।
विशदवंशवनानि शनैः शनै-
र्ध्वनयता [नयताऽऽननविभ्रमम् ] ।।३३।।

इह लताभवनेऽतिसुशीतले
मणिशिलातलतल्पनिषादिनी ।

स्वपिति कामवती श्रममन्थरा
विगतरागतराधरपल्लवा ॥३४॥

इह विकासितकिंशुकपादपो
ललितकोकिलनादविनोदवान् ।
सततमेव वनानि विभूषयन्
सुमधुरा मधुरातनुते लताः ॥३५॥

भ्रमति चारु करोति कलध्वनिं
विशति पत्रचये द्रुतमञ्चति ।
इति निजप्रियया सह संचर(56a)-
न्नविरलं विरलंकुरुते लताः ॥३६॥

मुदितमत्तमधुव्रतमण्डली
मधुरकाकलिकाभिरलंकृता ।
इह सदैव विभाति लतावली
सकुसुमा कुसुमाकरसङ्गमात् ॥३७॥

नवविकस्वरनिर्मलमल्लिका-
कुसुमसौरभसेव्यसमीरणः ।
इह तपर्तुरुदञ्चिततारकं
सुखमयं खमयं कुरुते सदा ॥३८॥

निविडपल्लवभाजि लतागृहे
दयितया सह केलिपराः सुराः ।
अपि तपर्तुदिने न विदन्त्यमी
सुखरताः खरतास्तपनत्विषः ॥३९॥

सुरभिधीरसमीरतरङ्गिते
विकसदम्बुजराजिविराजिते ।
इह विहारसुखं दयितासखः
सरसि को रसिको न विगाहते ॥४०॥

व्यपगतालसतास्तुहिनोदया-
दतिसुशीतलहैमनमारुतैः ।
प्रमुदिताः परिरभ्य चिरं स्मरो-
द्धुरजनी रजनीषु विलासिनः ॥४१॥

स्फुरति कुन्दलता कुसुमान्विता
वहति शीततमश्च समीरणः ।
शिशिरसङ्गमतोऽत्र सदा गिरौ
रसमयः समयः समुदञ्चति ॥४२॥

विशदकाशविकासिदुकूलिनो
समदहंसवतंसविभूषिता ।
विकसदब्जमुखीह विलासिनां
रसमुदे समुदेति शरद्वधूः ॥४३॥

अतिसमुच्छ्रितशृङ्गस(56b)मुद्गत-
त्रिदशराजवधूमुखवीक्षणात् ।
इह दिनेऽपि विधूदयशङ्किनी
कमलिनी मलिनीभवति क्षणम् ॥४४॥

मृगपतावपि विश्रुतविक्रमे
मदभरादवलेपपरा द्विपाः ।
अनुभवन्ति सुखं सकरेणवः
समकरा मकराकुलितेऽम्भसि ॥४५॥

वलितलोहितलोचनभीषणा
विपुलशृङ्गधरा वनसैरिभाः ।
दधति भीतिमुदारतरां सदा
रणरवेण रवेरपि वाजिनाम् ॥४६॥

निबिडपङ्ककदम्बकरम्बिता
जलदजालसमानतनुत्विषः ।

विरचयन्ति च दुर्दिनदुर्दशा-
मिह वराहवरा वनसीमनि ॥४७॥

अयमुपैति रुचिं धरणीधरो
विलसता निकरेण महीरुहाम् ।
सुरभिशीतसमीरणसङ्गतैः
प्रचलता च लतामृगशालिना ॥४८॥

विशदशीतलवारिविराजिताः
सरससारसहंसनिनादिताः ।
इह सदा विलसन्ति सरोवराः
कमलकोमलकोकनदान्विताः ॥४९॥

सततमस्य गिरीन्द्रशिरोमणे-
र्मसृणमञ्जुमणिव्रजकान्तयः ।
शिखरतः प्रसरन्ति सहस्रशो
मदपरादपराधगणा इव ॥५०॥

निवसता नलिनोदरमन्दिरे
मृदुमृणाललतादलमोदिना ।
(57a) विशदहंसगणेन निधीयते
सरसता रसता सरसामिह ॥५१॥

हुतहुताशनधूमपरम्परा-
सुरभिताखिलकाननराजयः ।
इह वसन्ति सदैव तपस्विनो
जपरताः परतापपराङ्मुखाः ॥५२॥

विकसितं किरणैरमृतद्युतेः
कुमुदकाननमुद्गतसौरभम् ।
विहरतीह समं दयिताशतै-
रलिनि केलिनिकेतमिहेद्यते ॥५३॥

किरणभिन्नदरीतमसः सदा
वलदमन्दमहौषधिवल्लयः ।
इह रुचिप्रकरेण समन्विता
रुरुचिरे रुचिरेण दिवानिशम् ॥५४॥

विधुरिवातिमनोरमतां गतो
ललितकान्तिकलः कनकाचलः ।
सुमनसामयमाननुतेतरां
चिरमुदारमुदानुगतं मनः ॥५५॥

प्रबलमत्तमतङ्गजसेवितो
वहति भूधरराजपदं सदा ।
कनकभूभृदसौ परिषेवित-
भ्रमरचामरचारुसमीरणैः ॥५६॥

तरलतारलतावरमन्दिरे
सरससारससान्द्रनिनादिते ।
विहरतीह रतीश इवानिशं
सरमणी रमणीयगुणो जनः ॥५७॥

कामिनीमिह सुचारुहारिणीं
हारिणीं मदनतापसंपदाम् ।
[1]कामयन्त्यनुगता विभा[व]रीं
भावरीतिचतुरा विलासिनः ॥५८॥

(57b) स्वेदबिन्दुनिचयाद्धनालका
सालकाननतिरोहितातपे ।
अत्र संचरति सार्वकामिके
कामिकेलिनिपुणा सुराङ्गना ॥५९॥

सदुज्ज्वलश्रीरयमिन्दुसुन्दरो
बिभर्ति मेरुः शिखरैरनुत्तमैः ।

---

१ कामयमानं प्रेरयन्ति ।

विलासिनः कुण्डलिनः सुभोगिनो
विलासिनः कुण्डलिनः सुभोगिनः ॥६०॥

हरिचरणविराजमानमौलिं
बहुवयसानुगतं सुवंशजातम् ।
अमुमृषिमुपमानयन्ति लोका
बहुवयसानुगतं सुवंशजातम् ॥६१॥

इति निगदति पार्थे वीक्ष्य मेरुं नमेरु-
व्रजरुचिरमुदारं स्फीतमालैस्तमालैः ।
मुररिपुरपि मोदं प्राप दुष्प्रापमुच्चै-
र्दधति मुदमुदारां कौ तु के कौतुके न ॥६२॥

स्वान्तध्वान्तविधूननं प्रणमतां दीर्घोदरं ध्यायता
धन्यं किञ्चन हृद्गतं नवजवासिन्दूरसान्द्रं महः ।
धीरश्रीकविकर्णपूरकृतिना कौतूहलान्निर्मिते
काव्ये चारुणि पारिजातहरणे सर्गोऽगमद्दिक्समः ॥६३॥

—०—

## [ एकादशः सर्गः ]

अथ वीक्ष्य सुवर्णभूधरं रुचिरं दिव्यमुदारसम्पदा ।
नववारिविहारकौतुके तरसा चित्तमधात्ततो हरिः ॥१॥

रुचिरा रुचिरूर्जि[तं यशो] विमलं यौवनमुन्नतं मनः ।
अनुरागपरा मृगीदृशो न किमुद्दीपनकारणं हरेः ॥२॥

कृतभूरिविभूषणाः समं हरिणा (59a) केलिकलाविलासिना ।
करिणीरधिरुह्य सादरं ललनाः काननमुज्ज्वलं ययुः ॥३॥

शरदिन्दुसमाननत्विषां नवकौसुम्भमनोज्ञवाससाम् ।
सुदृशां तनुकान्तिधारया रुचिराकारमकारि काननम् ॥४॥

धृतकञ्चुकिपाणयः शनैरवतीर्याथ करेणुसंघतः ।
सह केलिविदा सुरद्विषा विविशुः काननमम्बुजेक्षणाः ॥५॥

घटमानकटाक्षसायका कुटिलभ्रूधनुरुल्लसद्गुणा ।
शुशुभे ललनावली तदा मदनस्येव घना वरूथिनी ॥६॥

दयिताभिरुदारमानसे विशति श्रीमति काननं हरौ ।
ऋतवो निजसम्पदूर्जिता युगपत्काननमासिषेविरे ॥७॥

विकसत्सहकारपल्लवैर्ललितैः कोकिलकूजितैरपि ।
मधुना समकारि कानने रुचिरा काचन कान्तिरुच्चकैः ॥८॥

श्रमखेदहरः समीरणो ललितं कोकिलकाकलीशतम् ।
विकसत्कुसुमानता लताः सुरभिः किं न चकार तन्मुदे ॥९॥

स्तवकेषु विरेजुरुच्चकैरलयः सम्यगशोकशाखिनाम् ।
जगदुन्मथितुं हुतास्तिला मधुनाग्नाविव कामसाधकाः ॥१०॥

अतिनिर्मल(58b)मल्लिकावलत्कुसुमामोदमुदारमुद्गिरन् ।
मरुदुष्मणि मानसे हरेर्मुदमुद्दामतमामकल्पयत् ॥११॥

विचकासः कदम्बडम्बरो व्यनदन् प्रावृषि मत्तबर्हिणः ।
त्रिजगन्मथनाय निर्भरं समनह्यन् मुदितोऽथ मन्मथः ॥१२॥

नवव[ा]रिदगर्जमूर्जितं निनदं कौतुकिनां च केकिनाम् ।
उपलभ्य न का नितम्बिनी कृतकोपापि ययौ प्रियान्तिकम् ॥१३॥

विमलं वियदुज्ज्वलः शशी विशदं वारि विकासि पङ्कजम् ।
समदाः परितः पतत्रिणः शरदाकारि जगन्मुदावृतम् ॥१४॥

मदमांसलहंसनादिता विकसत्पङ्कजरेणुरञ्जिताः ।
रुचिरा वनराजयस्तदा मदयन्ति स्म मनो विनोदिनाम् ॥१५॥

हिमसङ्गमशीतमारुतो विकसत्कुन्दमरन्दमेदुरः ।
रचयन् परिणाहिनीर्निशाः शिशिरः सौख्यमधान्मुरद्विषः ॥१६॥

शरदिन्दुमुखीशतैः समं रममाणस्य हरेः परिश्रमम् ।
शमयन्ननिशं शनैः शनैर्विववौ हैमनमारुतस्तदा ॥१७॥

परपुष्टकुटुम्बिनीरुतैः सहिता मत्तमयूरनिःस्वनाः ।
अधिकं रुचिरत्वमूहिरे गुणयोगो हि गुणा(59a)य भूयसे ॥१८॥

अधिकोकिलकेलिकूजितं रमणीनामपि चारुभाषितम् ।
उदियाय समन्ततस्तदा तुमुलो नाद इव स्मराहवे ॥१९॥

अथ मन्मथकोटिसुन्दरे सविधं श्रीदयिते समीयुषि ।
प्रमदासु तदा समुद्गताः प्रसभं भावतरङ्गराजयः ॥२०॥

प्रियमानसमोहनेच्छया स्फुटयन्ती कुचकाञ्चनाचलौ ।
परिवृत्तमुखी मुहुर्मुहुः कबरीमुद्गतबाहुरस्पृशत् ॥२१॥

अवलम्ब्य करेण नीविकां घनघर्मस्तिमितस्तनाम्बरा ।
मुरजिद्वदनार्पितेक्षणा ललना काचन मोहभूरभूत् ॥२२॥

कुपितेव जवादुपागता भ्रमयन्ती नवनीपकोरकम् ।
हरिहासविलाससमोहिता तरुणी चित्रगतेव काप्यभूत् ॥२३॥

अतिनिश्चललोचना वलद्घनघर्मप्रकरैः करम्बिता ।
अवलम्ब्य सखीं स्थिता चिरं शरविद्धेव दृढं मनोभुवा ॥२४॥

मुरजिद्वदनावलोकिनी तरुणी काचन चञ्चलेक्षणा ।
स्खलति स्तनशैलतोऽम्बरे कबरीमेव मुहुः परामृशत् ॥२५॥

इति मुग्धमना नितम्बिनीनिकरः कौतुकभाजि कानने ।
वनमालिमयं समन्ततो जगदेव प्रसभं व्यलोकयत् ॥२६॥

(59b) रमणीगणचित्तपूर्तये रुचिरश्रीरनुरागकर्षितः ।
भगवानपि योगमायया शतशः स्वीयतनूरकल्पयत् ॥२७॥

चतुरैर्दयिताशतैः समं रममाणे मुदिते रमापतौ ।
कुसुमेषुरजस्रमर्जयन् निजसाम्राज्यभरानजृम्भत ॥२८॥

कुसुमानि' निजैः कराम्बुजैर्मुहुरादाय जवादुपागताः ।
कुतुकेन मुरारिमस्तके व्यकिरन् सादरमब्जलोचनाः ॥२६॥

सुदृशः कुसुमानि कौतुका[द्] द्रुतमादातुमुदीर्णबाहवः ।
रचिताः स्तनवस्त्रहारिणा हरिणा कोपवलत्त्रपालसाः ॥३०॥

कनकाभकदम्बकोरकै [गुलिका]स्त्रैरिव कामधन्विनः ।
विदधुः कपटाहवं तदा कुतुकोत्फुल्लविलोचनाः स्त्रियः ॥३१॥

अधरं [भ्रमरेण खण्डितं] दयित ! द्रागवशोच्यतामिह ।
गदितः प्रिययेति सादरं हरिरालिङ्ग्य चिरं चुचुम्ब ताम् ॥३२॥

दयितो नवपल्लवभ्रमात् प्रणयिन्याः करमग्रहीन्मुहुः ।
हसितोऽपि चिरं सखीजनैर्घनघर्माम्बुभिरेव बोधितः ॥३३॥

दयितेन भृशं कुतूहलात् स्थलपद्माहतया मृगीदृशा ।
तरसा यदकारि सीत्कृतं मदनस्तेन कृतार्थतामगात् ॥३४॥

घनघर्मकरम्बिताम्बरे (60a) कुचशैले स्फुटतामुपेयुषि ।
सुदृशा नवकेसरावलीरजसाकारि चिरं निगूहनम् ॥३५॥

अवधूय रसालमञ्जरीर्घनमादाय परागमञ्जसा ।
व्यकिरन् कुतुकात् परस्परं निभृतं नेत्रदलेषु सुभ्रुवः ॥३६॥

नवनीपपरागशङ्कया प्रणयिन्या नयने निमीलिते ।
दयितोऽथ चुचुम्ब सादरं चतुरश्चारुतरं तदाननम् ॥३७॥

अतिकोमलमल्लिमालया दयितेन प्रसभं समाहता ।
कुपितेव शनैरताडयत् सुमुखी तं च पलाशपल्लवैः ॥३८॥

कुसुमप्रकरैः करम्बितां कबरीमब्जदृशो निभालयन् ।
अवलेपमधात्तदा [भृशं] रसिकः केलि[कि?]कलापकेष्वपि ॥३९॥

निभृतं कुतुकेन कामिनं निवसन्तं गहने लतागृहे ।
अवलोक्य चिरान्मृगीदृशः करतालोत्तरलं मुदाहसन् ॥४०॥

रुचिराणि सुचारुसौरभैरधरोदारमधूर्जितानि च ।
मुखवारिरुहा[णि] सुभ्रुवां भ्रमरा निर्भरमासिषेविरे ॥४१॥

प्रमदातनुविच्युतैर्वनं रुचिराकारमभूद्विभूषणैः ।
हरिकेलिविलोकनोत्सवाद्वरतारानिकरैरिवा[चि]तम् ॥४२॥

स्खलिता कबरी च्युताः स्रजो गलितं पत्रमभूषणा तनुः ।
(60b) पुपुषुस्तदपि श्रियं परां प्रमदाः किं रुचिरस्य भूषणैः ॥४३॥

घनघर्मकरम्बिता तनुर्विततश्वासविशुष्कमाननम् ।
सुदृशां स्तनभारमन्थरा गतिरासीदलसं च मानसम् ॥४४॥

हृतचम्पकचारुसौरभो विकसत्कुन्दमरन्दतुन्दिलः ।
श्रमवारि विहारसम्भवं ललनानां मृदुमारुतोऽहरत् ॥४५॥

घनचन्दनसेकसङ्गिनां व्यजनानामनिलेन वीजिताः ।
विजहुः श्रममम्बुजेक्षणा नवताम्बूलनिषेवणादिभिः ॥४६॥

विहरन्नपि कानने घने दयिताभिः सममब्जलोचनः ।
जलकेलिषु चित्तमादधे विविधेष्टं हि मनो विनोदिनाम् ॥४७॥

करिणीभिरिवोन्मदद्विपाः सुरनारीभिरिवेश्वरा दिशाम् ।
सहिता दयिताभिरादराद्यदुवीरा दिविषन्नदीं ययुः ॥४८॥

वरसारसहंसनिःस्वनैर्विकसच्चारुसरोरुहानना ।
द्युनदी जगदीशमाह्वयत् प्रणयेनेव तरङ्गपाणिभिः ॥४९॥

मृदुशीकरिभिः समीरणैर्वलदम्भोरुहचारुसौरभैः ।
सुरराजनदी [मृ]गीदृशां मुदमुद्दामतमामकल्पयत् ॥५०॥

अथ वारिविहारकौतुकप्रसरन्निर्भरमोदमेदुराः ।
सलिलं विविशुर्मृगीदृशो (61a)द्रुतमन्योन्यकरावलम्बिताः ॥५१॥

परिपीनपयोधराचलैर्निहताः सर्वत एव सुभ्रुवाम् ।
सभया इव वारिभङ्गयस्तरसैवापरतीरमाश्रिताः ॥५२॥

पुलिनानि नितम्बडम्बरैः स्फुरदम्भोजकुलानि लोचनैः ।
अलिकेलिरुतानि भाषितैर्विजितानि प्रमदाभिरञ्जसा ॥५३॥

कृतकोप इवाम्बुना मुहुर्दयितेनाभिहता मनस्विनी ।
कुचशैलयुगेन कामिनी कुटिलभ्रूर्दृढमाजघान तम् ॥५४॥

कुतुकोल्लसिता मृगीदृशः प्रसरत्कोपकषायिता इव ।
सिषिचु: सलिलैः परस्परं वलयध्वानमनोहरैः करैः ॥५५॥

सुदृशः परिवार्य सर्वतः सिषिचुः कामपि केलिगर्विताम् ।
अथ सापि सि[षिच] तास्तदा नववक्त्रैव भिया न निर्ययौ ॥५६॥

नवनीरजकानने घने निवसन्त्याः कुतुकान्मृगीदृशः ।
मुखमब्जधिया परामृशन् हसितः कश्चन कामिनीगणैः ॥५७॥

जलसिक्तमुखी यदञ्जसा ललना चारु चकार सीत्कृतम् ।
अतनोरपि तत्तदाभवत् त्रिजगन्मोहनसिद्धिरुद्धता ॥५८॥

अतिगर्ववशादुपागता तरुणी कापि समीपमञ्जसा ।
वरबाहुयुगेन निर्दयं दयि(61b)तेन द्रुतमेव सस्वजे ॥५९॥

चलितोऽपि जवेन [व]ल्लभो द्रुतमादाय सनालमम्बुजम् ।
अथ वीक्ष्य मुखं मृगीदृशो हृतचेता इव तस्थिवांश्चिरम् ॥६०॥

कुतुकोत्तरलेन केनचित् कुचशैलादपसारितेऽम्बरे ।
अरुणाननलोचना तदा चिरमाकण्ठममज्जदम्भसि ॥६१॥

जलकेलिपराङ्मुखीं रुषा तरुणीं कामपि तीरचारिणीम् ।
उपगृह्य तदानयद्बलादबला वारि गभीरमञ्जसा ॥६२॥

परितः परिवार्य सुभ्रुवः प्रणयक्रोधभरारुणाननाः ।
करवारिजवारिशीकरैः सिषिचुर्माधवमानताननम् ॥६३॥

अथ[रश्मयु]तरागभूषणोऽरुणमक्षिद्वयमाकुलाः कचाः ।
मुखमुच्चमुदारसीत्कृतं सुदृशां नीरनिषेवणादभूत् ॥६४॥

सभयेव निमज्जती जले कपटात् काचन चञ्चलेक्षणा ।
सविधेऽपि समस्तसुभ्रुवां प्रियकण्ठग्रहसौख्यमन्वभूत् ॥६५॥

निभृतं समुपेत्य कौतुकात् कुचशैलेऽर्पयति प्रिये करम् ।
चकितानतभङ्गुरभ्रुवा सुदृशाकारि भृशानतं शिरः ॥६६॥

प्रमदा मदमेदुरान्तरा रुचिरोदारविहारमन्त[रा] ।
अतिकम्पकरम्बिता गिरः प्रवदन्त्यो युवचित्तमा[हरन्] ॥६७॥

हरतापि विभूषणश्रियं घनकम्पप्रसरप्रदायिना ।
अधिकः समकारि वारिणा रमणीनां रमणीयतामदः ॥६८॥

दलदब्जदृशां चकाशिरे कुचशैलेषु नखक्षतस्रजः ।
त्रिजगद्विजयोर्जितौजसो मदनस्येव यशःप्रशस्तयः ॥६९॥

घनकम्पभृतो मृगीदृशामधरा वागमृतैः करम्बिताः ।
तुहिनस्तिमितैर्दधुस्तुलामनिलान्दोलितवल्लिपल्लवैः ॥७०॥

कुचकुङ्कुमकर्दमोत्करैर्नवकौसुम्भरसैश्च वाससाम् ।
अनुरागवतीव माधवे द्युनदी द्रागरुणां रुचिं दधौ ॥७१॥

हरिवारिविहारकौतुकं ललितं वीक्षितुमुत्कचित्तया ।
सुदृशेव घनाम्बराशया विचकाशेऽम्बरसीम्नि सन्ध्यया ॥७२॥

चरमाचलबन्धुजीवकस्तबकस्तोमरुचौ दिवाकरे ।
हृदयानि रथाङ्गपक्षिणामदुनोद् भाविवियोगवेदना ॥७३॥

ददता करमम्बरान्तरे स्फुरदस्ताचलकुञ्जचारिणा ।
दयितेव चिरानुरागिणा चरमाचुम्बि दिगुष्णभानुना ॥७४॥

वियदङ्गनविद्रुमस्थली दिवसाशोकविलोलपल्लवम् ।
चरमाचलकुम्भिकम्बलो विमलोऽलक्ष्यत भा(62b)नुमण्डलः ॥७५॥

नयनं जगतामधीशितुर्विमलानामवलम्बनं रुचाम् ।
निपपात तथापि भास्करो विधियोगः किल केन वार्यताम् ॥७६॥

मिहिरेऽस्तगते निमीलिता नलिनी विष्णुपदं मलीमसम् ।
विरहाकुलिता च चक्रिणी तनुते किं न विपन्महौजसाम् ॥७७॥

अथ धीरतरः समीरणः कुसुमामोदमुदारमुद्गिरन् ।
हिमशीकरसङ्गशीतलो मदयामास मनो विनोदिनाम् ॥७८॥

अथ वदनविसारिसीत्कृताभि-
घनतरकम्पतरङ्गितस्तनीभिः ।
सममखिलकलाविलासिनीभिः
प्रभुरपि तीरमगात्तदाम्बुनद्याः ॥७८६॥

[ल]सन्नितम्बस्तनभारमन्थरै-
र्विमुच्यमानं प्रमदाकदम्बकैः ।
वियोगदुःखादिव लोलतां गतं
सुरापगावारितटान्तमुद्ययौ ॥८०॥

मुकुलितनलिनानि प्रोल्लसत्कैरवाणि
प्रसृमरतिमिराणि ध्वस्तसूर्यातपानि ।
मदमुदितचकोरीनादसान्द्राणि कामं
दधुरधिकमनोज्ञां कान्तिमाशामुखानि ॥८१॥

प्रत्यङ्गसङ्गतकुरङ्गमदं मनोज्ञं
वैदूर्यहारमपि नीलनिचोलमुच्चैः ।
एणीदृशां रमणवेश्मविनिःसृताना-
मुक्तार्थ(63a)यन्निव रराज घनान्धकारः ॥८२॥

आलिम्पन्निव निर्भरं दशदिशः कालागुरूणां रसै-
रातन्वन्निव भूषणं त्रिजगतां सान्द्रेन्द्रनीलोत्पलैः ।
तल्पं संपरिकल्पयन्निव दिवस्तापिच्छवल्लीदलैः
प्रत्याशं च समुल्ललास तरसा गाढान्धकारोत्करः ॥८३॥

स्वान्तध्वान्तविधूननं प्रणमतां दीर्घोदरं ध्यायता
धन्यं किञ्चन हृद्गतं नवजवासिन्दूरसान्द्रं महः ।

पूर्णः श्रीकविकर्णपूरकृतिना कौतूहलान्निर्मिते
काव्ये चारुणि पारिजातहरणे सर्गोऽयमेकादशः ।।८४।।

—०—

## [ द्वादशः सर्गः ]

उद्भासयन्नथ नभः कनकावदातै-
स्तेजोभि[र]ब्जविनिमीलनसिद्धमन्त्रः ।
आनन्दयन् कुमुदकाननमुद्धतश्रीः
शीतद्युतिः कनकशैलमलंचकार ।।१।।

उज्जृम्भमानघनभासि तुषारभानौ
स्फीता दिशो दश विनोदपराश्चकोराः।
आनन्दिनो कुमुदिनी विमलं विहायः
को वा बिभर्ति न सतामुदयेन मोदम् ।।२।।

सञ्चारयन् मृदु[करान्] परितः प्रजाना-
मासञ्जयन् मुदमुदारतराननश्रीः ।
स्फीताम्बरप्रचुरकान्तिभराभिरामो
राजा जगद्वलयमुज्ज्वलयांचकार ।।३।।

(63b)चामीकराचलशिरोविशदातपत्रं
पौरन्दरोज्ज्वलहरिद्वदनारविन्दम् ।
व्योमाङ्गनारुचिरदर्पणबिम्बमारात्
सौधाकरं सपदि मण्डलमुल्ललास ।।४।।

आरोपितो वियदनर्गलवेदिकायां
पीयूषपूरहविरुद्धतकान्तिबिन्दुः।
चेतोऽनिशं वशयितुं रसिकस्य काल-
होत्रा हुतो मदनवह्निरिवाविरासीत् ।।५।।

उद्यत्तमालदलभासिनभोवकाशे
रेजुर्निशाकरकरप्रकरास्तदानीम् ।

विस्तारिता इव हरिन्मणिवेदिकाया-
मुद्दामकुङ्कुमरसाः कुसुमायुधेन ॥६॥

शोणाम्बुजैरिव वियद्वरुणालयस्य
रक्तांशुकैरिव निशामणिमेखलायाः ।
काश्मीरपङ्कनिकरैरिव दिग्वधूना-
मुद्भासितं भुवनमिन्दुमहःप्रतानैः ॥७॥

ताराभिरामगजमौक्तिकपंक्तिहार-
हृद्येन निर्मलगुणोत्करगुम्फितेन ।
वक्षःस्थले ललितभासि निशाग्मण्या
माणिक्यनायकदशापि सुधाकरेण ॥८॥

विभ्राजमानघनकान्तिसमुज्जिहान-
ज्वालाशतो विततनीव्रकलङ्कधूमः ।
आदीपयन् वियदुदारवनीमनेकां
दावानलो विधुरमानि वियोगिनीभिः ॥९॥

सङ्गार्थिनी ललितमन्मथव(64a)ल्लभस्य
रात्रिर्वियद्विमलतल्पतले निषण्णा ।
संवीक्षितुं मुखमुदारतरं दधार
प्रोद्दामदर्पणमिषेण शशाङ्कबिम्बम् ॥१०॥

विभ्राजमानवदनानि हरिद्वधूना-
मामोदयन् कुमुदकाननसौरभेण ।
शीतो मुहुस्तुहिननीरनिषेवणेन
सायन्तनो हृदि मुद पवनस्ततान ॥११॥

तिग्मद्युतौ विरतिभाजि यदन्धकार-
वारांनिधौ निरवधौ जगदाममज्ज ।
द्रागुद्यता तदुदधारि करोत्करेण
शीतांशुना किमुरुधामभृतामशक्यम् । २२॥

शीतद्युतिद्युतिनिरस्तसमस्तशोभा-
सर्वस्वमम्बुजवनं तरसा विहाय ।
श्रीरध्युवास कुमुदेषु मुदा तदानीं
निःस्वेषु कः प्रणयमर्हितमादधाति ॥१३॥

पीयूषनिर्मलजलप्रकरेण पूर्णः
कान्तिप्रवालपटलं सकलं दधानः ।
कन्दर्पमङ्गलमहाकलशः सितांशु-
रुद्यन्नभःस्थलमलङ्कृतमाततान ॥१४॥

श्रीमान् वियद्विपिनसीम्नि यथायथाव-
तारापतिः करमुदारतरं ततान ।
दिक्चक्रवालभुजगप्रकरस्तथैव
सद्यो जरत्तिमिरकञ्चुकमुन्मुमोच ॥१५॥

स्फीताम्बरा चलचकोरविशालनेत्रा
तारोल्लसद्विमलभूषणसंहितश्रीः ।
चन्द्रानना कुमुदसौरभसम्भृताङ्गी
सं(64b)मोदमाशु रजनीरमणी वितेने ॥१६॥

आलम्ब्य निर्मलकरैः स्फुरदम्बरान्तं
कान्ते मुदान्तिकमुपेयुषि शीतभानौ ।
ध्वान्तांशुकं तुहिनघर्मकरम्बिताया
द्रागापपात रजनीनलिनेक्षणायाः ॥१७॥

शुभ्रे निशाकरकरैर्गगनेऽतिमन्द-
मावाति कैरववनीपवनेऽतिशीते ।
आनन्दितैर्यदुगणैः सह कामिनीभि-
रारेभिरे सपदि कामकलाविलासाः ॥१८॥

संकेतकेतकनिकुञ्जगतागताभ्या-
माकल्पतल्पपरिकल्पनया च भूयः ।

दौत्यैः परस्परकृतैरनुरागभाजां
सा यामिनी पदमभूत्कमनीयतायाः ॥१६॥

उत्फुल्लकैरववनीकमनीयसान्द्र-
सौरभ्यसारसुभगेन समीरणेन ।
स्वैरं चकोरचरितैरपि मानिनीनां
मानापनोदनविधिं विधुराततान ॥२०॥

उद्दामकामहिमधामसमीरणादि-
संतप्यमानमनसः सुचिरं युवानः ।
एणीदृशां चरितचारुसुधासमुद्र-
संगाहनान्मुदमुदारतरामवापुः ॥२१॥

केचित् समुत्सुकहृदो निबिडानुरागा
द्रागागता ललितकेलिनिकुञ्जगेहम् ।
तत्रासमीक्ष्य दयितामतितापभाज-
स्तद्वर्त्मदत्तनयना मु([illegible])मुहुर्युवानः ॥२२॥

अङ्गेषु चन्दनरसं मृगनाभिबुद्धया
वासः सितं मलिनचोलधियार्पयन्ती ।
संप्रस्थिता रमणवेश्म मुदा तदानीं
काचिद् न्यषेधि सहसैव सखीजनेन ॥२३॥

संप्रस्थिता तमसि सान्द्रमसीसमाने
स्वैरं सरीसृपपरीतपथा कथञ्चित् ।
काचित्तदा कुलकलङ्कभयप्रदत्त-
तोयाञ्जलिः प्रणयमुज्ज्वलयांचकार ॥२४॥

दूतीकरार्पितकरा दलदिन्द्रनील-
सान्द्रद्युतौ तमसि काश्चन मोहवत्यः ।
एणीदृशः फणिफणामणिरश्मिजालै-
रालोक्य केलिवनवर्त्म दधुः प्रमोदम् ॥२५॥

[शू]न्या दिशो दश विषं विषयाभिलाषः
कामो यमस्तुहिनभानुरसौ कृशानुः ।
प्राणैः शपे सुमुखि ! संप्रति संप्रतीहि
जीवोऽपि मे खलु दुनोति मनोऽनुवेलम् ॥२६॥

इत्यादिवाग्विलसितैरनुमीयमान-
मानातिरेकवलितापि चिरं प्रियेण ।
अश्रूणि काचन तदा प्रमदा मुमोच
तन्नास्ति यच्चतुरचारुगिरामसाध्यम् ॥२७॥
कुलकम् ।

कामोपमाः सुरतकेलिविलासभाजो
राजोचितप्रचुरभूषणभूषिताङ्गाः ।
सार्धं प्रियाभिरनुरागरसार्द्रचित्ताः
स्वैरं पपुर्मधु मनोज्ञगुणं युवानः ॥२८॥

एणीदृशां वदन(65b)वारिरुहाणि रेजु-
रुज्जृम्भमाणमधुकाञ्चनभाजनेषु ।
आसेवितुं हृदयमाशु विलासभाजा-
मभ्यागता इव विमोहकरा विकाराः ॥२९॥

आपीय सीधु मधुरं सुचिरं विमूढा
शोणाननाम्बुजरुचिस्तरसालसाङ्गी ।
व्याघूर्णमाननयना मदनानुविद्धा
सुष्वाप कापि रसिकोरसि कोपनापि ॥३०॥

सद्योऽधरद्युतिरहारि हठादपूरि
लीलागतिर्द्रुतमकारि विकारि चेतः ।
एणीदृशास्तदपि सीधुनि सानुरागाः
को वेद वामनयनाहृदयं द्रढीयः ॥३१॥

कान्तैः समं सुरतकेलिरसोऽनुवेल-
मेणीदृशां गलितलज्जमसज्जदुच्चैः ।

आसेविते मधुनि मुग्धदृशामुदार-
व्याघूर्णमाननयनाम्बुजशोणभासाम् ॥३२॥

स्वेदाम्बुहारिणि मनोहरवारुणीना-
मामोदमुद्गिरति धीरतरे समीरे ।
दीर्घादरं सुरतरङ्गविधौ तदानी-
मेणीदृशो नवनवत्वमियाय चेतः ॥३३॥

दीर्घादरं मधुमदारुणलोचनाभि-
र्विस्तारिते घनदृगन्तशते तदानीम् ।
साम्राज्यमूर्जितमवाप्य मनोभवेन
नारोपितः किल करोऽपि धनुर्लतायाम् ॥३४॥

स्वेदाम्बुसंवलितमुद्गतलोमहर्षं
पीयूषपूरघनसारतुषारशीतम् ।
कामी करं हृदि (66a)[निधाय सुलोचनाया-]
स्तत्याज शम्बररिपोरपि बाणभीतिम् ॥३५॥

आलिङ्गति द्रुतमतिप्रणयेन कान्ते
सद्यःस्फुरद्विपुलकम्पकरम्बितायाः ।
आलीव घर्मपयसा घनतामुपेता
काञ्ची कथञ्चन निचोलमुवाह तन्व्याः ॥३६॥

कान्तेन कौतुकसमाहृतमानसेन
किञ्चिन्मुदा गदितया परिहासपूर्वम् ।
सान्तःस्मितं ललनया यदवादि सद्य-
स्तत्कस्य वा वचनगोचरतामुपैतु ॥३७॥

स्वेदाम्बुसंवलितचारुकुचामुदार-
कम्पालसां रतपरिश्रमनिःसहाङ्गीम् ।
कान्तामसीममदमेदुरलोचनान्ता-
मालिङ्ग्य कामपि युवा मुदमाततान ॥३८॥

स्वैरं समर्पयति कामिनि कौतुकेन
पाणिं पयोधरमहीधरयोर्नताङ्ग्याः ।
सञ्जीवयन्निव मनोभवमञ्जसैव
मुग्धो न कामिनिकरः स्फुटमुल्ललास ॥३९॥

लोलालकं चलकुचाचलयुग्ममुच्चैः
शिञ्जानकिङ्किणि रणद्घनधर्मजालम् ।
विस्तार्य चारु पुरुषायितमायताक्षी
यूनो मनोमुदमुदारतरां वितेने ॥४०॥

ग्रस्तो महान्धतमसा सहसा सुधांशु-
रुच्चैर्मुहुर्मुहुरकम्पि कुलाचलाभ्याम् ।
तारावली प्रसभमेव पपा(66b)त सद्यः
को वा [दशां वदतु] काममहीधरस्य ॥४१॥

आस्यानि चञ्चदलकानि विलासिनीनां
स्वेदाम्बुभिः परिवृतानि चिरं निनिन्दुः ।
निस्यन्दमानमकरन्दरसालसानि
शैवालजालजटिलानि सरोरुहाणि ॥४२॥

[उद्दाम]कामकुतुकाहृतमानसाना-
मेणीदृशां रतपरिश्रमनिःसहानाम् ।
आलिङ्ग्य तुङ्गकुचशैलतटीं पटीर-
पङ्काङ्किताः प्रतिपलं मुदिता युवानः ॥४३॥

अतिलकमलकं च्युताधरश्री-
र्नखरनखक्षतदन्तुरौ स्तनाद्री ।
तदपि मृगदृशो रतेऽनुरक्ताः
शिव शिव किं न मनोभवस्तनोति ॥४४॥

अलिभिरधिकमाद्यन्मानसैः सेव्यमानो
लुलितकुसुमतल्पामोदसम्भारगर्भः ।

श्रमजलमबलानामाचचाम प्रकामं
रजनिविरतिशङ्काधीरधीरः समीरः ॥४५॥

प्रियकण्ठनिषक्तबाहुमूला
प्रबलप्रेमभृतो विलासवत्यः ।
अधिगत्य निशावसानमुच्चैः
सहसोद्वेगमहोदधौ ममज्जुः ॥४६॥

निद्रालसामेव शनैस्तदाना-
मानाय वक्षः प्रिय आदरेण ।
आलिङ्ग्य कश्चिद् दयितां विलासी
दीर्घं मुहुर्निःश्वसितं ततान ॥४७॥

चिरेण हित्वा बत बाहुबन्ध-
मन्योऽन्यमा[लिङ्ग्य दृढं च शश्वत्] ।
[उद्वेल](67a)तोर्निःश्वसतोस्तदानीं
यूनोर्मनो मन्थरमाविरासीत् ॥४८॥

बिभ्राणाः श्लथमंशुकं मधुमदाद्भूयःस्खलन्त्यो वलद्-
घर्माम्भःस्नपिताः सखीकरतटीविन्यस्त[हस्ताम्बुजाः] ।
उद्यज्जागररागमेदुरदृशः प्रातः शनैर्निर्ययुः
केलीमन्दिर[तो] रतोत्सवभरायासालसाः सुभ्रुवः ॥४९॥

उपचितदशनक्षताधरौष्ठं
वलदलकाकुलमुद्गतश्रमाम्भः ।
मदमुदितदृशो मुखारविन्दं
मनसि न कस्य महोत्सवं ततान ॥५०॥

स्वान्तध्वान्तविधूननं प्रणमतां दीर्घादरं ध्यायता
धन्यं किञ्चन हृद्गतं नवजवासिन्दूरसान्द्रं महः ।
धीरश्रीकविकर्णपूरकृतिना कौतुहलान्निर्मिते
काव्ये चारुणि पारिजातहरणे सर्गोऽगमद् द्वादशः ॥५१॥

—o—

## [ त्रयोदशः सर्गः ]

अथ निर्भरभूभारहारिणा नरकारिणा ।
प्रेषितः प्राप तरसा सात्यकिः सुरपत्तनम् ॥१॥

आसाद्य त्रिदशाधीशसंसद शिनिपुङ्गवः ।
उवाच तरसाखर्वगर्वगर्भाः पुरो गिरः ॥२॥

विक्रमाक्रान्तदिक्चक्रचञ्चत्कीर्त्तिहिमद्युतेः ।
दूतोऽहं यदुवीरस्य सात्यकिस्त्वामुपस्थितः ॥३॥

चतुरश्चतुरम्भो(37b)धिमेखलाक्षितिनायकः ।
यदुवाच मुरारातिः सुराधीशावधेहि तत् ॥४॥

याचितः कतिधा नैव भवान देवद्रुमं मया ।
न तथापि त्वयाकारि मयि सानुग्रहं मनः ॥५॥

तदायतोऽस्मि रभसादद्याहमतिथिस्तव ।
समालोच्य समं स्वीयैरत्र युक्तं विधीयताम् ॥६॥

आवयोः सदृशी तृष्णा जिष्णो ! देवद्रुमं प्रति ।
विना पौरुषमेतस्य कोऽपि नातः परं प्रभुः ॥७॥

इत्यालोच्य वचोऽस्माकं स्मृत्वा स्वीयं च भाषितम् ।
संग्रामाङ्गणसीमानमलंकुरु बलान्तक ! ॥८॥

मद्दोर्दण्डमहोद्दण्डशरधारापराजितः ।
स्वां दिशं च न वेत्स्यन्ति कान्दिशीका दिवौकसः ॥९॥

विद्राव्य भवदुद्दामवाहिनीगणमोजसा ।
यदकारि न केनापि तद्विधाताहमाहवे ॥१०॥

मदुद्दामगदाघातविदलद्दण्डमण्डलः ।
मदोन्म[1]दोऽपि ते हस्ती न स्थिरीभावमेष्यति ॥११॥

स्वर्गिणां जीवनं सद्यः कृत्वाहिविशिखानने ।
मयाशयाम्बुजक्रोडे कृतं देवद्रुमः फलम् ॥१२॥

कुण्डलीकृतकोदण्डो यमदण्डोपमैः शरैः ।
अद्य सद्यो विधास्यामि निर्दैवतमिदं जगत् ॥१३॥

मद्वाहिनीगणान्दो(67b)[लालोलचेतास्तदप्रियम् ।
वि]दधातु विधातापि कथमत्यन्तशङ्कितः ॥१४॥

मयि बिभ्रति कोदण्डे के वराका दिवौकसः ।
किमुदेति तमः क्वापि प्रखरे भाति भास्करे ॥१५॥

अञ्जसा शिञ्जिनीं शार्ङ्गे यावदासञ्जयाम्यहम् ।
विलासः सुरनारीभिस्तावदेवानुभूयताम् ॥१६॥

[आकर्णयन्ती सेनायाः सिंहनादं ममोर्जितम् ] ।
सुपर्ववाहिनी नूनं मूकतामेष्यति क्षणात् ॥१७॥

स्थितोऽसि यदि संग्रामे वीरव्रतमनुस्मरन् ।
तद् द्रक्ष्यसि मदुद्दण्डदोर्दण्डद्वयजृम्भितम् ॥१८॥

देहि देवद्रुमं शक्र ! वक्रता मयि का तव ।
प्रणयो वर्धतामुच्चैरावयोरावयोरिव ॥१९॥

इत्यवेत्यामराधीश ! मयि देहि सुरद्रुमम् ।
सीमन्तेषु सुरस्त्रीणां सन्तु सिन्दूरबिन्दवः ॥२०॥

इति व्याख्यातमखिलं भाषितं दनुजद्विषः ।
अथ यच्च मयेदानीमुच्यते तन्निशम्यताम् ॥२१॥

कः सहेत जगज्जैत्रं तेजो दनुजविद्विषः ।
वेगं विहगराजस्य किं रुणद्धि सरीसृपः ॥२२॥

दूरादपि समाकर्ण्य धनुर्ध्वानं मधुद्विषः ।
कस्तथास्ति महावीरो यो धीरो भवति क्षणम् ॥२३॥

लीलया छिन्दतानेन बाणबाहुमहावनम् ।
रणे न गणिता रुद्राः केऽन्ये क्षुद्रा दिवौकसः ॥२४॥

अस्ति कस्तादृशो लोके श्रीमानुग्रपराक्रमः ।
युधि यः स्पर्धतामद्धा शार्ङ्गिणा रणरङ्गिणा ॥२५॥

तज्जहीहि रणारम्भदम्भसम्भारमञ्जसा ।
भ[वेदे](68a)व तथा वह्नौ शलभस्येव ते गतिः ॥२६॥

बलफाल्गुनकामाद्याः सन्तु वीरा मधुद्विषः ।
अहमेव क्षमो हर्तुमेकः सुरमहीरुहम् ॥२७॥

इत्युच्यमाने वचने मुहुः सत्यकसूनुना ।
तरसैव सुरेशस्य शोणत्वं दधिरे दृशः ॥२८॥

पराहतोऽपि दूतोक्तैस्तरङ्गैरिव वारिधेः ।
तत्याज न हरिः स्थैर्यं शिलोच्चय इवोच्चकैः ॥२९॥

अथ रोषारुणीभूतलोललोचनरोचिषा ।
शोणयन संसदागारमवदत्पाकशासनः ॥३०॥

पुरैव श्रुतमस्माभिर्नारदात्तदुदीरितम् ।
शैनेय ! नाधिकं किञ्चित् त्वयाद्य विनिवेद्यते ॥३१॥

परं तु यदि संग्रामकामस्ते यदुनन्दनः ।
तदायातु समं स्वीयैरशनेरस्य संमुखम् ॥३२॥

गाढाहङ्कारझङ्कारक्रूरा यदुपतेर्गिरः ।
यास्यन्ति व्यर्थतां सद्यः शरद्घनरवा इव ॥३३॥

मौनमाश्रयते सूर्यस्त्रिलोकीं तापयन्नपि ।
न प्रायः [शक्तिमन्तो हि वृथावाग्जाल]वल्गिनः ॥३४॥

लालितोऽपि मया कृष्णः प्रकाशयति वक्रताम् ।
सुधासिक्तोऽपि सन्तापमातनोति हुताशनः ॥३५॥

वर्धितस्तापयत्युच्चैर्दह्त्याशु स्वमाश्रयम् ।
स्वभावः (69a) कोऽपि दुर्ज्ञेयः खलस्य ज्वलनस्य च ॥३६॥

स्नेहैः संवर्ध्यमानोऽपि मालिन्यं तनुतेऽधिकम् ।
न मुञ्चति च कौटिल्यं पिशुनः केशपाशवत् ॥३७॥

समुदेति प्रदोषेषु न तेजः सहते क्वचित् ।
अन्धकार इव क्रूरः सदा जगति दुर्जनः ॥३८॥

तिरस्करोति गर्वान्धो गुरूनपि गतत्रपः ।
आन्दोलयति किं मेरुशिखरं चञ्चलोऽनिलः ॥३९॥

यदवादि मुकुन्देन निजवीर्यमदोष्मणा ।
तद् युक्तमेव वीराणां यदि स्थाता स सङ्गरे ॥४०॥

क्व तेजः सुरवीराणां जगद्विजयजाङ्घिकम् ।
क्व मानवगणैर्युद्धं विदधाति न किं विधिः ॥४१॥

मन्महाशनिसम्भूतज्वालाजालमहानलः ।
भूलोकं भस्मसात् कर्ता [वीक्षमाणे] मधुद्विषि ॥४२॥

क्षान्तमेव मया सर्वं यदवादि मधुद्विषा ।
दूषणेऽपि यदज्ञानामज्ञतैव समर्थनम् ॥४३॥

यातु सत्वरमद्यापि निवृत्य यदुनन्दनः ।
न सन्तु यदुवीराणां दारा हारावकर्षिताः ॥४४॥

इतिवादिनि सक्रोधं पुरुहूते मुहुर्मुहुः ।
प्रत्युवाच शिनेर्नप्ता सप्तार्चिरिव संज्वलन् ॥४५॥

उक्तमुक्तं हरेरद्य तवापि श्रुतमीरितम् ।
कलहे युवयोरिन्द्र ! भद्रं नाकलयाम्यहम् ॥४६॥

परं त्वहमिदं मन्ये दृष्टतद्वीर्यवैभवः ।
हस्त एवास्ति विन्यस्तः कंसारेर्देवतद्रुमः ॥४७॥

विक्रमाक्रान्तदिक्चक्रे धृतचक्रे सुरद्विषि ।
पुरुहूतादयो देवाः के वा सङ्गरसीमनि ॥४८॥

तदुपेहि सगीर्वाणगणो मानोन्नतो रणम् ।
केसरीव करीन्द्रं त्वां लक्ष्मीशश्चिरमीक्षते ॥४९॥

इति सात्यकिरत्युग्रगर्वगर्भमुदीरयन् ।
जगाम तदनुज्ञातः सविधं मधुवैरिणः ॥५०॥

प्रयातेऽथ मुकुन्दस्य दूते रोषारुणेक्षणे ।
चकार स्वबलं सज्जमूर्जितश्रीः पुरन्दरः ॥५१॥

तर्जयन् जगतीमुच्चैरूर्जितैर्गजगर्जितैः ।
प्रतस्थे समरारम्भदम्भो दम्भोलिभृत्स्वयम् ॥५२॥

अथैरावणमुद्दाममारोहति पुरन्दरे ।
द्रुतमारुरुहुर्देवाः स्वानि यानानि सर्वतः ॥५३॥

समीक्ष्य समरोद्योगमपर्वणि सुपर्वणाम् ।
असुरत्राससंमूढा मुमुहुः सुरसुभ्रुवः ॥५४॥

सम्भाव्यविरहव्याधिमुग्धा यदमरस्त्रियः ।
व्रजतां सुरसङ्घानां तदेवासीदमङ्गलम् ॥५५॥

उद्धतध्वजिनीनादैर्धनुर्ध्वानैश्च सर्वतः ।
नादयन्तो दिशः सर्वाः सुपर्वाणः प्रतस्थिरे ॥५६॥

विभूषणगणोद्द्योतविद्योतितनभस्थलाः ।
ध्वजि(70a)नीं भूषयामासुः कुञ्जरा मदमेदुराः ॥५७॥

दन्तिदन्तसमोद्दामबाहुमण्डलमण्डिताः ।
ययुः समरसंरम्भदम्भपूर्णाः पदातयः ॥५८॥

नर्तयन्तस्तुरङ्गालीः प्रासोल्लासितपाणयः ।
अश्ववारवराश्चेरुर्दर्पा इव शरीरिणः ॥५९॥

अन्वीयमानस्तरसा सुपर्वभिरखर्वधीः ।
जगाम समरारम्भदम्भो दम्भोलिभृत् स्वयम् ॥६०॥

धूमधूम्रच्छवीः कुर्वन् परितो हरितोऽनिशम् ।
उद्धतं प्रययौ योद्धुं प्रज्वलन् ज्वलनः स्वयम् ॥६१॥

महोद्दण्डेन दण्डेन ब्रह्माण्डं दण्डयन्निव ।
प्रययौ शमनः शीघ्रमरातिशमनाशया ॥६२॥

प्रज्वलज्ज्वलनाकारा महोदारास्त्रपाणयः ।
लक्षशो राक्षसा जग्मुर्योद्धुमुद्धतचेतसः ॥६३॥

कल्पयन् प्रलयाशङ्कामकालेऽपि जलोत्करैः ।
जगाम समराशंसी पाशी पाशयितुं द्विषः ॥६४॥

कम्पयन् प्रबलैर्वेगैः सर्वतः कुलपर्वतान् ।
आन्दोलयामास महीमञ्जसैव प्रभञ्जनः ॥६५॥

गलहालाहलज्वालाजटालैर्लोचनानिलैः ।
रुद्रा विद्रावयामासुर्दिशामाशु प्रसन्नताम् ॥६६॥

उद्दामसमरारम्भदम्भसम्भारसम्भृतः ।
गदापाणिरुदारश्रीर्यक्षेशोऽपि क्षणाद् ययौ ॥६७॥

आजगाम न यच्छेषः प्रयात्यपि दिवस्पतौ ।
(70b) तेनैव प्राप स प्रौढां पीडां भुवि भरार्दितः ॥६८॥

किरणैः क्रोधपूर्णानामचिरेण सुपर्वणाम् ।
कोटिसूर्योर्जितद्योतिविद्योतितमभून्नभः ॥६९॥

निनदेन महोद्दामवरूथिन्या बलद्विषः ।
भुवनानि महोत्पातवातेनेव चकम्पिरे ॥७०॥

हरिरैरावतस्कन्धनिषण्णः क्षितिमण्डले ।
अर्पयामास दर्पेण दृशः कोपकषायिताः ॥७१॥

कलयन्निव संग्रामे सुरराजपराजयम् ।
बलधूलीभरव्याजान्मन्दतामाप भानुमान् ॥७२॥

सर्पतां परितः प्रौढगजानामूर्जितत्विषाम् ।
निपेतुर्मुशलाकारा मदधारा महीतले ॥७३॥

आपतन्ती जवाद् वाजिराजिरत्युज्ज्वल[ा]कृतिः ।
व्यलोकि कुतुकोत्फुल्लैः सुरगङ्गेव गां गतैः ॥७४॥

वैमानिकविमानौघज्योतिर्मण्डलमण्डिते ।
व्योम्नि व्याजृम्भमाणोऽपि न दिदीपे दिवाकरः ॥७५॥

यावदाकर्णयन्नादमुत्पश्यति वियज्जनः ।
तावदेव सुराधीशध्वजिनी मेदिनीमगात् ॥७६॥

अथ देवबलोद्दामवेगवायुपराहता ।
चकम्पे मृदुशम्पेव मेरोः शिखरसंहतिः ॥७७॥

तुरङ्गमरवैरुग्रैरूर्जितैर्गजगर्जितैः ।
वसुधा ब(71a)हुधा कम्पमाबभार भयादिव ॥७८॥

नलिनान्दोलिना चारुशीकरोत्करशालिना ।
रचिता विहितायासाः समीरेण दिवौकसः ॥७६॥

अथ विविधविनोदानादधानो निकामं
रुचिरकनकशैलाभ्यासमासाद्य सद्यः ।
द्रविणमिव दरिद्रः काङ्क्षमाणो मुकुन्दं
सुरपतिरमितश्रीर्यामिनीं तामनैषीत् ॥८०॥

स्वान्तध्वान्तविधूननं प्रणमतां दीर्घोदरं ध्यायता
धन्यं किञ्चन हृद्गतं नवजवासिन्दूरसान्द्रं महः ।
पूर्णः श्रीकविकर्णपूरकृतिना कौतूहलान्निर्मिते
काव्ये चारुणि पारिजातहरणे सर्गोऽग्निचन्द्राङ्कितः ॥८१॥

—०—

## [ चतुर्दशः सर्गः ]

अथोद्धतैर्देवपतेर्वचोभिर्निवेद्यमानैः शिनिपुङ्गवेन ।
समीरवेगैरिव रोहिताश्वो हरिस्तदानीमधिकं दिदीपे ॥१॥

अखर्वगर्वं बहुलं बलारेर्यथा यथा सात्यकिराशशंस ।
तथा तथा कोपकषायितश्रीर्ददौ दृशं चक्रधरः स्वचक्रे ॥२॥

अथोग्ररोषारुणभीषणश्रीर्ललाटबद्धभ्रुकुटीतरङ्गः ।
निर्यातुमत्यूर्जितबाहुवीर्यो बलानुजः स्वं बलमादिदेश ॥३॥

गुणान्मनोज्ञादिव कीर्तिधारास्त्रिनेत्रनेत्रादिव वह्निभासः ।
अपामधीशा(71b)दिव भङ्गसङ्घा गिरेर्निरीयुर्मुरजिद्ध्वजिन्यः ॥४॥

उदग्रवेगातुलदर्पभाजस्तुरङ्गमानर्धर्वनि नर्तयन्तः ।
सुवर्णसन्नाहभृतोऽश्ववाराः प्रासोल्लसत्पाणितला निरीयुः ॥५॥

आयोधनारम्भधृतोरुदम्भाः सम्भावयन्तो विजितं महेन्द्रम् ।
वीराः परामर्दनवर्धमानरुषो हृदा मोदमुदारमापुः ॥६॥

प्रचण्डतुण्डाः समुदग्रशुण्डा हिरण्मयोद्दामकुथावनद्धाः ।
ययुर्जवैर्जङ्गमशैलकल्पाः कल्पान्तपाथोदसमाः करीन्द्राः ॥७॥

स्फुरन्महोत्तुङ्गतुरङ्गनादमुद्दामचक्राक्रमितारिचक्रम् ।
सुवर्णसन्नाहभृदुग्रमानी रथाङ्गपाणी रथमारुरोह ॥८॥

अथान्तकं वैरिमहीपतीनां प्रयान्तमुद्वीक्ष्य रथाङ्गपाणिम् ।
सर्वे सुपर्वेशमहेशतुल्यास्तमन्वधावन् बलफाल्गुनाद्याः ॥९॥

धनाभिलाषीव वदान्यमुच्चैरुच्चैःश्रवःस्वामिनमीक्षमाणः ।
अतिष्ठदाकृष्टसुरारिमानोऽनुगम्यमानो ध्वजिनीभिरीशः ॥१०॥

अथोद्धतैर्माधवसैनिकानामुद्दण्डकोदण्डरवैरतीव ।
फणीव पादाहतिभिस्तदानीं महोग्रमानी हरिराप रोषम् ॥११॥

सुपर्वसङ्घैः परितः परीतो मुदोपनीतोज्ज्वलमङ्गलश्रीः ।
(72a)[दम्भोलिपाणिः प्रखर]प्रतापसन्तापितारिः समरं जगाम ॥१२॥

ततः प्रवृद्धोद्धतयुद्धरङ्गी प्रतापतुङ्गीकृतबाहुवीर्यः ।
सुपर्वसैन्यैः परितः परीतः पुरन्दरः प्राप हरेः समीपम् ॥१३॥

जवात्पतन्तावतिवीर्यवन्तौ तरङ्गसंघाविव सागरस्य ।
समीयतुः सङ्गरभूमिभागानुपेन्द्रदेवेन्द्रचमूसमूहौ ॥१४॥

अनल्पकल्पान्तसमीरसङ्गात् समुत्पतन्ताविव वारिवाहौ ।
बलोत्करावेत्य तयोः समन्ताद्वितेनतुर्द्रागतिसान्द्रनादान् ॥१५॥

पदातिपादोद्धतधूतिजालमहान्धकारे ग्रसति त्रिलोकीम्
मुहुर्महावीरपरम्पराणां तनुप्रभैवोद्भटभानुभासः ॥१६॥

निजप्रभोर्नाम समुद्गिरन्तो रणोग्र[विक्रान्ति]पराः प्रवीराः ।
मिथः शरानुग्रतरान् वितेनुः पयःप्रवाहानिव वारिवाहाः ॥१७॥

यशो हिमांशुप्रतिमं स[म]न्तादसुव्ययेनापि समीहमानाः ।
परस्परस्पर्द्धितया तदानीमस्त्रप्रहारान्विदधुः प्रवीराः ॥१८॥

समित्समारम्भधृतोरुदम्भाः सम्भावयन्तो विजयं स्वकीयम् ।
निपातयामासुरपारसाराः प्रहारधारावलिभिर्विपक्षान् ॥१९॥

ललाटबद्धभ्रुकुटीतरङ्गाः सगर्वमागत्य पदाति(72b)संघाः ।
निपातयामासुरसिप्रहारैरुदग्रदन्तावलदन्तकुन्तान् ॥२०॥

मुहुर्महोत्साहनियोज्यमानैरथाशु दूनैर्द्विषदाशुगेन ।
समीहितार्थैरिव दुर्णयानां शिलीमुखैरर्द्धपथे निपेते ॥२१॥

अपि प्र[कामा]र्जितवीर्यभाजाममून् हरन्तस्तरसानुवेलम् ।
तदान्तकस्येव कटाक्षधारा महोग्रसारा विशिखा निपेतुः ॥२२॥

विभिन्नवक्षाः क्षतजोक्षिताङ्गो रेजे तुरङ्गोपरि कोऽपि वीरः ।
रणश्रिया दीर्घतरानुरागं सभाजितः शोणमणिस्त्रजेव ॥२३॥

मुहुर्मुहुः स्वामिसमर्प्यमाणसम्मानदानप्रणयादिकानाम् ।
विधातुमानृण्यमिवेहमाना महोग्रमाना युयुधुर्युवानः ॥२४॥

निषूदिताधोरणयोर्विपक्षैर्द्विपेन्द्रयोरुन्मदयोस्तदानीम् ।
महोग्रसंग्रामविलोकनोत्कैरकारि वीरैः क्षणमाजिमान्द्यम् ॥२५॥

सुचारुचामीकरपूर्णपुंखैः पतद्भिरुद्भासिपतत्रिपक्षैः ।
[अमृ]ष्यतां बाणगणैरनेकैर्विकीर्यमाणं वियदाबभासे ॥२६॥

मुहुर्महावीरगणैर्विभिन्नमहोग्रकुम्भाः समराजिरेषु ।
युगान्तवातैरिव पात्यमाना महीधरा दन्तिवरा निपेतुः ॥२७॥

समीर(73a)वेगाविव वावदूकवचःप्रपञ्चाविव चाव्यवस्थम् ।
मुहुर्मुहुर्भङ्गजयौ तदानीं समापतुर्माधवदेवसैन्ये ॥२८॥

संभिद्यमानेषु निजाङ्ककेषु विच्छिद्यमानेष्वपि वाहनेषु ।
द्विषत्प्रवाहस्फुरदुग्ररोषैरकारि वीरैर्न मनोऽपि दूनम् ॥२९॥

उदञ्चयन्तश्चलचामराणि चर्माणि चारूणि पदातिसङ्घाः ।
प्ररोहयामासुरसिप्रहारैरुषर्बुधं वारणदन्तकुन्तात् ॥३०॥

वीरप्रहारोत्करमूर्च्छितानां महागजानां रुधिरप्रवाहाः ।
उद्दामभूमीधरनिर्झराणामवापुरुग्रां रुचिमाहवेषु ॥३१॥

विभूतिभारैरिव रोहिताश्वो मदैरुदारैरिव सद्गुणौघः ।
विनिर्जितो माधववीरवर्गैश्चमूसमूहो न हरेर्विरेजे ॥३२॥

विलोकयन्तः स्वबलं दिगिन्द्रा विद्रावितं माधववाहिनीभिः ।
विस्तारयन्तः शितशस्त्रधारा रणाङ्गणं कोपपराः समीयुः ॥३३॥

उषर्बुधः कोपभरैः परीतः समुज्ज्वलन्तीं तनुमादधानः ।
धृतायुधः प्रोद्धतयुद्धरङ्गी ज्वालाजटालः स्फुटमाविरासीत् ॥३४॥

प्रकम्पयन्तं श्वसितेन शैलानुदग्र[शृङ्ग]क्षतभानुबिम्बम् ।
अधिष्ठितः कासरमुग्ररूपं ययौ यमो योद्धुमथोद्धतश्रीः ॥३५॥

(73b)धृतायुधैर्विग्रहवद्भिरुग्रैः पाथोधिभिर्द्राक् परितः परीतः।
जगाम संग्राममहीमहीनतेजाः प्रजानामधिपः प्रचेताः ॥३६॥

महीधराणामपि शृङ्गसंघानान्दोलयन् वेगभरैरुदारैः।
उद्वेल्लयन् वारिधिवारिपूरान् प्रभञ्जनोऽहंयुरथ प्रतस्थे ॥३७॥

स पुष्पकं कामगमं विमानमारुह्य यक्षैरनुगम्यमानः।
दधद्गदामुग्रमदारुणश्रीर्धनाधिनाथस्त्वरितः प्रतस्थे ॥३८॥

विभ्राजमानः स्वमहोभिरुच्चैरुच्चैःश्रवःपृष्ठगतो गरिष्ठः।
अवार्यवीर्य[:] प्रययौ जयन्तो विस्तारयंस्तोषभरं मघोनः ॥३९॥

द्रुतं समारुह्य निजानि यानान्युदीरयन्तोऽथ गिरः सगर्वाः।
सर्वे सुपर्वेशनिदेशभीता दिवौकसः सङ्गरभूमिमीयुः ॥४०॥

सुपर्वणां दुर्विषहैर्महोभिरापूर्यमाणेषु हरिन्मुखेषु।
बलं बलाद्यैरभिपाल्यमानं विभीषितप्रायमभून्मुरारेः ॥४१॥

भयाकुलं स्वं बलमीक्षमाणा महोग्रमानाधिकदर्पभाजः।
बलादयः प्रौढभुजप्रतापाः संग्रामसीमानमथाभिजग्मुः ॥४२॥

यमं बलः पाशकरं किरीटी गदोऽनिलं सात्यकिरग्निमुग्रम्।
मुदा(74a)[श्रयं तं च जवाज्जयन्तं जगाम कामः स]मराभिरामः ॥४३॥

बिभ्रद्गदामुग्रमदारुणश्रीः क्रोधोद्धतो युद्धमहीमुपेतः।
विलोकितो निर्भरभीतलोकैर्यमो यमस्यापि स सीरपाणिः ॥४४॥

रणाङ्गणे नि[स्तुललाङ्गलास्त्रैः कालं वि]निर्जित्य जगर्ज भूयः।
करीव वल्लीमथ कामपालो विलोकयामास सुपर्वसेनाम् ॥४५॥

अथागतः प्रौढबलैरुपेतः क्रोधोद्धतः पाशयितुं विपक्षान्।
निरुद्धवेगः शरवर्षपाशैरकारि पाशी किल फाल्गुनेन ॥४६॥

विद्येव दारिद्र्यभरैरुदारैस्तुषारपूरैरिव पङ्कजश्रीः।
पराहतः फाल्गुनबाणवर्षैरपां पतिर्निष्प्रभतामुवाह ॥४७॥

गदोग्रबाणव्रजदीर्यमाणो यदाप मान्द्यं समरे समीरः ।
वसन्नपि श्रीमति चन्दनाद्रौ जहाति नाद्यापि तदेव नूनम् ।।४८।।

अनल्पकल्पान्तहुताशनभीः समुज्ज्वलज्वालजटालदेहः ।
दहन् दवप्रायमरातिसैन्यमग्निर्ययौ सात्यकिमत्युदग्रः ।।४६।।

विनिर्दहन्तं ध्वजिनीं मुरारेः स्पृशन्तमुद्दामशिखाभिरग्रयान् ।
उषर्बुधं वारुणबाणवर्षैः शिनिप्रवी(74b)रः शमयांबभूव ।।५०।।

अथाकिरन् बाणतरङ्गसङ्घान् ययौ जयन्तो जलधिप्रकाशः ।
असह्यतेजाः किल तं विपक्ष्य बभौ तदा सह्य इवाशु कामः ।।५१।।

[क्रमेण] बाणग्रहणेन योगेनाकर्षणेनैव विमोक्षणेन ।
प्रलक्षि शिक्षावशतस्तदानीं तयोः करः क्वापि युधि प्रवीरः ।।५२।।

ऐन्द्रसूनुस्तरसा शरोघैर्जघान वाहान् युधि शंबरारेः ।
छित्त्वा स तूणं च धनुस्तदानीमथोर्जितश्रीः प्रसभं जगर्ज ।।५३।।

अमृष्यमाणः किल तस्य नादान् फणीव पादाहतिमुग्रवीर्यः ।
दामुपादाय ललाटपट्टे जयन्तवाहस्य जघान कामः ।।५४।।

रङ्गराजस्तदुरुप्रहारमासाद्य सद्यो विकलीकृताङ्गः ।
विषादयन्निन्द्रमनस्तदानीमुदारनादान् सुचिरं मुमोच ।।५५।।

आकृष्य रश्मीनतियत्नभाजा निवारितोऽपीन्द्रसुतेन गाढम् ।
उवाह वाहः स्थिरतां न किं वा चला[चलत्वं न भयार्दितानाम् ] ।।५६।।

महोग्रवेगैर्घनबाणवर्षैर्यदुप्रवीरैरभिहन्यमानाः ।
अकर्णधारेव तरिस्तदानीं बभ्राम देवध्वजिनी निकामम् ।।५७।।

अथोत्तरङ्गः स्फुरदुग्रकुम्भीकुम्भीरभीमः समरः प्र(74a)वीरः ।
[उदीर्णशस्त्राहिरपूर्वभा]भिरवाप कल्पान्तपयोधिलक्ष्मीम् ।।५८।।

करीन्द्रदन्तार्पितकर्णभूषाः कृतास्त्रहाराः क्षतजाङ्गरागाः ।
मदोन्मदाः शोणितसीधुधाराः कपालपात्रैरपिवन् पिशाच्यः ।।५६।।

[क्षतक्षरद्वीरशरीर]मुच्चैरादाय दर्पात् परिचर्चयन्तः ।
उत्तालतालोत्तरलं तदानीं पिशाचसंघा ननृतुः समन्तात् ॥६०॥

शिवारवैर्भूरितरैर्गभीरैर्महोग्रनादैरपि कौणपानाम् ।
विदीर्यमाणेव शरैरुदारैर्मही महाक्रन्दितमाततान ॥६१॥

शूलेन विद्धः कुपितेन यन्त्रा संचूर्ण्यमानोऽपि पदा गजेन ।
सहैव संरम्भमहोग्रदम्भैर्मुमोच कश्चिद् युधि जीवितानि ॥६२॥

धन्यं विमानमधिरुह्य सुराङ्गनानां
स्वीयं वपुः समरसीम्नि समीक्षमाणाः ।
आनन्दतुन्दिलहृदः स्फुटमाशशंसु-
र्वीरान्वये निजजनुर्जननान्तरेऽपि ॥६३॥

मार्तण्डः कुमुदोत्करानिव गु(75b)णग्रामानिवोच्चैर्मदः
कालः प्राणिगणानिव स्फुरदनभ्यासोऽथ विद्यामिव ।
दौर्जन्यं प्रणयानिव स्फुटशिखो वह्निर्वनालीमिव
श्रीमानुग्रपराक्रमो रिपुचमूद्रागाममर्दाच्युतः ॥६४॥

स्वान्तध्वान्तविधूननं प्रणमतां दीर्घादरं ध्यायता
धन्यं किञ्चन हृद्गतं नवजवासिन्दूरसान्द्रं महः ।
पूर्णं श्रीकविकर्णपूरकृतिना कौतूहलान्निर्मिते
काव्ये चारुणि पारिजातहरणे सर्गोऽब्धिचन्द्राङ्कितः ॥६५॥

—०—

## [ पञ्चदशः सर्गः ]

देवसैन्यमथ दैन्यमुपेतं वीक्ष्य कोपभरभङ्गुरितभ्रूः ।
व्याकिरन्निशितसायकधारामाजगाम समरं सुरराजः ॥१॥

क्रोधविद्धहृदयस्य बला[रेः शोण]लोचनसहस्रमयूखैः ।
उल्लसन्छिखिशिखाभिरिवोच्चैः शोणिमानमवहन् घनमाशाः ॥२॥

उग्रकान्तिरधिरूढकरीन्द्रः सङ्गरे सुरपतिः स विरेजे ।
मेरुमूर्ध्नि घनरोचिरुदग्रो(76a) [भानुमानिव निदाघसमृद्धः] ॥३॥

[वीक्ष्य] कोपकलितैर्नरवीरैर्हन्यमानमपि दैवतसैन्यम् ।
अर्पयन्नपि करं शरपुङ्खे लज्जते स्म बलवृत्रनिहन्ता ॥४॥

गण्डमण्डलगलन्मदधारानिर्झरेषु दनुजारिगजेषु ।
[पर्वतेष्विव पुरा परमोजाः सं]मुमोच मघवा निजमस्त्रम् ॥५॥

भज्यमानहृदयत्रिकपृष्ठा भिन्ननेत्रकरकर्णललाटाः ।
पीडिता मघवता शरजालैर्जीवितानि मुमुचुर्युधि वीराः ॥६॥

बाहुभिर्निपतितैस्तरुणानामुल्लसन्मणिमयूखविचित्रैः ।
रेजिरे रणभुवः सुखसुप्तैर्दीप्तमूर्धभिरिवोरगराजैः ॥७॥

बिभ्रत्कोदण्डमुग्रं कुपितयममहोद्दण्डदण्डायमानैः
काण्डव्रातैः प्रचण्डैः समिति विचरतां खण्डयन् मुण्डखण्डान् ।
क्रोधज्वालाजटालां नयनदशशतीमुद्वतामादधानो
मानोद्दामः सुरेन्द्रोऽनल इव निखिलैर्वीरलोकैर्व्यलोकि ॥८।

कुण्डलीकृतशरासनो मनोजा(76b)ग्रदुग्रतरकोपपावकः ।
वीरनीरनिधिमन्थमन्दरः संचचार परितः पुरन्दरः ॥९॥

केसरीव करजैः करिसङ्घान् सायकैर्युधि निहत्य नृवीरान् ।
मौक्तिकैरिव यशोभिरुदारैराततान विशदां हरिरुर्वीम् ॥१०॥

अथाकुलं स्वं बलमीक्षमाणो मानोन्नतो दर्पहरो रिपूणाम् ।
मुहुः प्रसन्नाननपुण्डरीको जगाम योद्धुं जगतामधीशः ॥११॥

धन्यं धनुर्जयधुरन्धरमादधानो
दानोन्नतद्विरदराजसहस्रदर्पः ।
सन्नाहवान् समरसीम्नि हरिस्तदानीं
वीरो रसः स्फुट इव त्रिदशैरमानि ॥१२॥

आकृष्य मौर्वीं भुजगेन्द्रगुर्वीं सदा रणोर्वीवलदुग्रगर्वः ।
स तीक्ष्णबाणैरशनिप्रमाणैः सन्तापयामास सुप[र्वसंघान्] ॥१३॥

[प्रसह्य विद्धाः] समरे सरोषं शरैरुदारैर्मधुसूदनेन ।
चक्राभिघातैरिव शैलकूटा समन्ततो देवभटा निपेतुः ॥१४॥

वितत्य कोदण्डमखण्डधामा कामाभिरामोऽपि यशायमानः ।
स कोटिमेको(77a) दशवेगकोट्या शरैस्तदैकं रिपुमाजघान ॥१५॥

शिक्षादक्षतया तदा मुररिपोरालोकितः कैरपि
ज्याबन्धेन शरः शरेण च करस्तत्रापि न स्पन्दनम् ।
किं त्वेतद् घटमानकारणशरासारैर्ययौ दृक्पथं
न द्यौर्नैव नभो न वा वसुमती नापि द्विपन्मण्डलम् ॥१६॥

दैत्यारयः स्फुरितरोषभरारुणाभि-
र्वाग्भिर्दृशामरुणतामवतारयन्तः ।
नीहारनीरनिकरैरिव पर्वतेन्द्रं
श्रीमन्मुकुन्दमकिरन्नुरुशस्त्रसंघैः ॥१७॥

सगर्वमुरुविक्रमैर्दितिजवैरिवीरोत्करै-
र्विमुञ्चति समन्ततो निशितशस्त्रसंघान्मुहुः ।
अदीपि न दिवाकरो न विरराज दिङ्मण्डलं
व्यलोकि न नभस्तलं न गतिमाप्तवान् मारुतः ॥१८॥

निवारयन् वैरिसमीहितार्थान् सुधीरिवोद्दामनयप्रयोगान् ।
विनाशयन् दैवतबाणवर्षं वायव्यमस्त्रं मुरजिन्मुमोच ॥१९॥

उन्मूलयन् गुरुतरानपि भूधरौघा-
नान्दोलय[न्न]पि शिरांसि कुलाचलानाम् ।
निर्धूय तत् त्रिदशबाणमहास्त्रवर्षं
विश्वं प्रकाशमयमाशु मरुच्चकार ॥२०॥

शरान्धकारे स्तिमिते जगत्यामादित्यबिम्बे च विराजमाने ।
सन्तापयामास शरैर्विपक्षानुद्दण्डको[दण्डधरो] मुरारिः ॥२१॥

जवादहंपूर्विकया प्रधावतां सुपर्वणां वाहयुगाभिघातजैः ।
समुद्यदुद्दामरजोभिरूर्जितैरकारि कासां न दिशां विवर्णता ॥२२॥

दर्पादाह्वयतां[1] मिथः प्रसरतां [वीर]व्रजानां मुहुः
शस्त्राशस्त्रि कचाकचि प्रविलसद्दोर्दण्डचण्डद्विषाम् ।
संरम्भादभिधावतां मदवतामत्यूर्जितं गर्जतां
दन्तादन्ति च दन्तिनामपि महत्यासीदमीषां समित् ॥२३॥

निपातयन्तः सदसिप्रहारै-
रगातिवेगानवहेलयेव ।
अलातचक्रप्रतिमाः समन्तात्
तुरङ्गिणः संगरसीम्नि चेरुः ॥२४॥

[2]संयुध्यतां समरसीमनि वैरिवीर-
प्रौढप्रहारभरनिर्भरमूर्च्छितानाम् ।
संजीवनौषधम(784)[भूद्भरिदृष्टिवृष्टि-
रिष्टार्थकृत्सति] विधौ सदये न को वा ॥२५॥

मुरद्विपद्बाणविभिद्यमान-
सुपर्वसेनागणशोणितानाम् ।
सहस्रशः सङ्गरसीम्नि धारा
नदानुकाराः सस्रुपुः समन्तात् ॥२६॥

निजबलमवलोक्य [भीतिभुग्नं
क्षतमभितो बत] दह्यमानचेताः ।
अथ समरमहीमहीनवीर्यो
हरिमभि दैवतनायकः प्रतस्थे ॥२७॥

महोद्दामसंग्रामसंभाव्यदम्भा
जयं भावयन्तो निजं तोषवन्तः ।

---

१ आत्मनेपदमुचितम् । २ क्यजन्तमिदम् ।

बलद्वर्णसौवर्णसन्नाहनद्धा
ययुर्योद्धुमद्धा समृद्धाः सुरेन्द्राः ॥२८॥

ततः प्रेर्यमाणो मघोनानुवेलं
मुदा माद्यदैरावणः संगरेषु ।
समुद्दण्डशुण्डाप्रचण्डातिपातै-
रपारोग्रसारान ममर्दारिवीरान् ॥२९॥

मदोन्मादिना तेन गाढं गजेन
प्रवृद्धानि युद्धाङ्गणे सैनिकानि ।
वनानीव कल्पान्तवाताभिघाता-
च्चलच्छैलराजेन चूर्णीकृतानि ॥३०॥

गजं वीक्ष्य संख्योद्धतं पङ्कजाक्षो
ब(74b)लक्षोभमत्युद्भटं भावयित्वा ।
करे कार्मुकं बाणसन्धानबद्धं
तदोल्लासफुल्लाननश्रीश्चकार ॥३१॥

जवादापतन्तं बलं मर्दयन्तं
करीन्द्रं तमुद्दामदर्पान्नदन्तम् ।
बलद्दानदम्भे महोदारकुम्भे
शरेणोरुसारेण शौरिर्जघान ॥३२॥

अपारसारेण शरेण शौरेः
पराहतो मर्मणि वारणेन्द्रः ।
धुन्वन् मुहुर्मौलिमुदीर्णनादो
न्यषेधि शक्रेण पलायमानः ॥३३॥

मान्थर्य गतवति वारणे समन्ता-
दत्यन्त सरदुदारकोपपूर्णः ।
सन्नद्धैः सुरनिकरैः समं समस्तै-
रस्त्राणि त्रिदशपतिस्तदा मुमोच ॥३४॥

विमुञ्चतोर्बाणमहास्त्रसङ्घा-
नुदारदर्पान्नदतोः [प्रकामम्] ।
क[ल्पान्तमे]घप्रभयोस्तदानीं
युद्धं तयोरेव तयोरिवाभून् ॥३५॥

इत्थं तयोर्वीर्यवतोस्तदानीं
प्रवर्तमानेषु महाहवेषु ।
व्यलोकि लोकैर्विततेऽस्त्रवर्षे
न द्यौर्नभो ने(7५a)व [नवा ध]रित्री ॥३६॥

अथोद्यत्तदुद्द्योतविद्योतमाना
महोद्दाममानाः क्रुधा युध्यमानाः ।
निजानस्त्रपूरानपारोग्रसारान्
सुराः सङ्गरे शार्ङ्गिणि द्राग् वितेनुः ॥३७॥

मरुद[नलपरेतराजवारतो-
ष्पतिसुतपा]शिविशालशास्त्रसङ्घे ।
ग्रसति निजबलं बलानुजन्मा
स्मितपरिपूर्णमुखो धनुर्दधार ॥३८॥

शरैः प्रतीकारपरैस्तदानीं
निहत्य तद्दैव[त]शास्त्रसंघान् ।
संपीडयन्निर्भयमुग्रतेजाः
संमोहयामास सुरान् मुरारिः ॥३९॥

संमुग्धेषु सुरेषु शौरिविशिखैः सैन्ये च विद्राविते
मान्थर्यं गमिते च वारणपतौ वीरेषु गर्जत्सु च ।
वैरान्तं तरसा विधातुमधिकक्रोधोद्धतस्तत्क्षणाद्
वज्रं जर्जरितारिपञ्जरमधात् पाणौ पतिर्नाकिनाम् ॥४०॥

उद्यज्ज्वालाजटालः सपदि दश दिशो धूमधूम्रा वितन्वन्
कुर्वन् गर्वोद्धतानां समिति विचरतां मानसं मानशून्यम् ।

स्वैरारावैस्त्रिलो(79b)कीं सपदि [1]बधिरतामानयन्नुग्ररूपो
दम्भोलिर्दम्भभाजां त्रि[2]दशपतिकरे प्रौढदीप्तिर्दिदीपे ॥४१॥

कल्पान्तसंततपयोधरघोरनाद-
मुद्वीक्ष्य वज्रममरेशकरे मुरारिः ।
उद्दामदानवदवानलमुज्जिहान-
ज्वालावितानघनमाशु दधार चक्रम् ॥४२॥

निजैर्ज्वालाजालैः कवलयति दिक्चक्रमुदिते
महाचक्रे कोटिस्फुरदुरुखरांशुप्रतिनिधौ ।
चकम्पे शम्पेव त्रिभुवनमभूद् व्यग्रमरुणं
जजागार स्फारो मुरहरजयश्रीपरिकर ॥४३॥

उद्भ्रामयन् पाणितलेन यावत्
स्वचक्रमुन्मुञ्चति चक्रपाणिः ।
शिवाय शक्रस्य तु तावदेव
ब्रह्मादयो देवगणाः समीयु. ॥४४॥

मुदा नमन्मौलिरुदारचेताः
कृताञ्जलिः स्तोत्रशतं तदानीम् ।
स्वरेण धीरेण हरेः पुरस्तात्
प्रपञ्चयामास चिरं विरिञ्चिः ॥४५॥

यस्येहया जगदिदं समुदेति सद्यो
यद् योगिनो विगतरागभया भजन्ते ।
वेदान्तवेद्य(80a)मनवद्यगुणाभिरामं
तद्धाम संविदवलम्बितमाश्रयामः ॥४६॥

यद्भ्रूविलासवलितेषु जगत्सु नित्यं
लोकेशकेशवमहेशमुखा मखेशाः ।

---

१ Ms विविधतान्न । २ Ms भार्जास्र

निर्माणपालनविनाशकृताधिकारा-
स्तस्मै पुराणपुरुषाय नमो नमस्ते ॥४७॥

करुणावरुणालयाय नित्यं
दलदिन्दीवरदामसुन्दराय ।
अनवद्यगुणैकमन्दिराय
प्रणतत्राणविधायिने नमस्ते ॥४८॥

यो बिभर्त्ति भुवनानि नितान्तं
शेषतामुपगतो गुरुभारः ।
तं रसातलनिवासिनमीशं
सादरं नतदृशः प्रणमामः ॥४९॥

वितत्य भूतानि जगद्विभूतये
करोति यः सर्गमपाररूपिणम् ।
निलीयते यत्र च भूतसंहति-
र्गतिर्ममास्तां स परात्परः पुमान् ॥५०॥

निहत्य दैत्यानुरुभारभङ्कुरां
महीमहीनां लघुमाशु कुर्वते ।
कृपावताराय मुहुर्महात्मने
घनेन्द्रनीलद्युतये नमो नमः ॥५१॥

आविर्भवन्ति विरमन्ति यतो (80b)जगन्ति
यत्राविशन्ति न गिरोऽपि महामुनीनाम् ।
तद्धाम योगिजनचित्तनिवासि नित्यम्
आनन्दमन्दिरमुदारतरं भजामः ॥५२॥

क्रोधं विभो ! संहर संहराशु
पुरन्दरे मन्दमतौ मदान्धे ।
जरापराभूततनौ मुकुन्द !
तवायमास्तां मयि सुप्रसादः ॥५३॥

स्तुतिशतपरिणद्धं भक्तिनम्रस्य धातु-
गदितमिदमुदारं गौरवादाकलय्य ।
हरिरतिकरुणावान् संजहाराशु चक्रं
हृदुदयति न वक्रं मानिनामानतेषु ॥५४॥

स्वान्तध्वान्तविधूननं प्रणमतां दीर्घोदरं ध्यायता
धन्यं किञ्चन हृद्गतं नवजवासिन्दूरसान्द्रं महः ।
संपूर्णः कविकर्णपूरकृतिना कौतुहलान्निर्मिते
काव्ये चारुणि पारिजातहरणे सर्गः शरेन्द्वङ्कितः ॥५५॥

—o—

## [ षोडशः सर्गः ]

अथ स्तुतो वेदविदा विरिञ्चिना
कृतापराधेऽपि पुरन्दरे चिरम् ।
मुमोच रोषं मुरजिन्महामना
क्षमा [1]हि कीर्तिः प्रणतेषु मानिनाम् ॥१॥

(81a) ततो विधातारमपारविक्रमो
विमोचयन् भीतिभरात् पुरन्दरम् ।
स्मितद्युतिद्योतितसङ्गराङ्गणो
विनोदयामास गिरा मुरान्तकः ॥२॥

त्वया सरोजासन ! हेलयैव किं
विधातुमिन्द्रस्य शतं न शक्यते ।
[तथा]पि यन्मोचयसीन्द्रमुच्चकै-
रिह त्वदीया करुणैव कारणम् ॥३॥

तपोभिरुच्चैः फलितं ममाधुना
विधे ! सनाथस्य तवानुकम्पया ।

---

१ हृ कीर्तिं Ms.

अहो महायोगिजनैरवीक्षितं
महस्तवोद्दाममि[दं] यदीक्ष्यते ॥४॥

गुणान्मनोज्ञादिव चारुकीर्तयो
मदादिवोद्दामविकारराजयः ।
विधे ! विनिर्यान्तु समन्ततः सदा
प्रजाः प्रजानाथ ! शरीरतस्तव ॥५॥

मुदा विनिर्मासि जगत्त्रयीमिमां
दधासि विद्रावयसि क्षणादपि ।
जगत्प्रसूतेर्महिमानमद्भुतं
न वेद वेदोऽपि तवेश तत्त्वतः ॥६॥

विदूरिता दैवतनाथदुर्गतिः
कृतार्थिता मे च विलोचनत्विषि ।
इतः परं देव ! निदेशयाशु मां
निदे[श]कारी करवाणि किं तव ॥७॥

मुदा तदावादि हरिर्विरिञ्चिना
न नाथ ! वाच्यं भवतेति मत्पुरः ।
भवादयो देव ! वयं च तेऽवरा
न शासकः कोऽपि तवेश ! दृश्यते ॥८॥

विलोकितं तावकपादपङ्कजं
निपीतमेतत्तव भाषितामृतम् ।
समुज्झिता पातकतापसंहतिः
किमन्यदस्ति स्पृहणीयमीश ! नः ॥९॥

इदं तु देव ! प्रणतोऽहमर्थये
भयेषु रक्ष्यो भवता शतक्रतुः ।
वयं च चञ्चत्करुणाकरम्बितै-
र्विलोकनीया नलिनैर्दृगञ्चलैः ॥१०॥

सुरैः समन्तादभिवादितस्तदा
मुदा मुकुन्देन च भक्तितोऽर्चितः ।
विलोचनासेचनकस्तिरोहितो
विरिञ्चिपीयूषमयूखमण्डलः ॥११॥

अथ द्विषन्निर्भरभीतिवर्धने
निवारिते कंसजिता निजायुधे ।
हतत्विषां नाकनिवासिनां तदा
विजृम्भितं चेतसि जीविताशया ॥१२॥

स्मितावलोकैरमृतद्रवोपमै-
र्विनोदयन् मानसमाशु नाकिनाम् ।
[नवोन्नमद्(82a)]वारिदधीरनिस्वनो
मनोहरश्रीरिदमाह माधवः ॥१३॥

शुभाः शिखावन्त इव द्विजन्मनां
सदैव नः पूज्यतमाः सुरोत्तमाः ।
भवत्सु मान्येष्वपि मेऽद्य दुर्णयो
ददाति किं दुःसमयो न देहिनाम् ॥१४॥

फलार्थिभि[र्निर्भरभ]क्तिभावितैः
समर्च्यते [1]यत्प्रतिमापि मानवैः ।
मदोद्धतं युद्धमकारि तैरहो
सदोन्मदान् मूढधियो धिगस्तु नः ॥१५॥

अधीशितारो जगतां सुरोत्तमाः
क्षमध्वमेतं मम दोषमुद्ध[तम्] ।
विधेर्विधानाद् विरुणद्धि कस्य वा
न मानसं मोहमहातमःस्थितिः ॥१६॥

---

1 वः प्रतिमा Ms.

भयं न मत्तो भवतां भविष्यति
व्रजन्तु सर्वे समरं च मुञ्चत ।
सुरद्रुमः किं तु कियद्दिनं मयि
प्रदीयतां चेत् करुणा भवादृशाम् ॥१७॥

मुरारिरुग्रद्विनयो नयोर्जितं
वचस्तदानीमिदमाह वासवम् ।
अथाललम्बे खलु मौनमञ्जसा
न साधुवृत्ता बहुभाषिणः क्वचित् ॥१८॥

दयावता शार्ङ्गभृता निवेदितं
वचः सुधासारतुपारसुन्दरम् ।
(42b) द्रुमान् प्रदग्धानिव वृष्टिरुच्चकै-
र्विनोद[या]मास तदा दिवौकसः ॥१६॥

कृतापराधेऽपि रणोद्यतायुधे
दिवौकसां भर्तरि निर्जिते बलात् ।
हरेर्दयोदारमवेत्य भाषितं
द्रुतं न केषां द्रवतामगान्मनः ॥२०॥

अथ त्रपासम्मदपूर्णमानसो
यदा न शेके गदितुं शतक्रतुः ।
उवाच वाचस्पतिराशु माधवं
तदेङ्गितज्ञो गुणगुम्फिता गिरः ॥२१॥

कृतापराधः प्रसरत्त्रपाभरो
हरिर्न शक्नोति मुकुन्द ! भाषितुम् ।
अथास्य यच्चेतसि चित्रितं वच-
स्तदिङ्गितज्ञेन मया निवेद्यते ॥२२॥

विदन्ति यं वेदविदो न तत्त्वतो
यतो जगन्मण्डलमाशु जृम्भते ।

विशन्ति यं योगरता मुमुक्षवः
प्रयातु [स] ज्ञानपथं कथं भवान् ॥२३॥

वधाय देवद्विषतां परः पुमान्
कृतावतारः क्षितिमण्डले भवान् ।
विदन्ति मोहान्धधियस्तु मादृशा
न तावकं देव ! महत्त्वमुत्तमम् ॥२४॥

विहाय वैकुण्ठसुखान्यपि क्षितौ
[कृतावता(43a)]रोऽसि हिताय नाकिनाम् ।
अतोऽभितो राजति ते दिवानिशं
हरे ! नतत्राणसमुद्गतं यशः ॥२५॥

कृतोऽपराधः सुमहान्मरुत्वता
क्षमा च तस्मिन् भवता प्रकाशिता ।
न ते पुनः क्वापि तवापचीयते
स्फुरत्कृपा[पालिक]रम्बितं मनः ॥२६॥

सुरद्रुमो देव ! तवैव नीयतां
यथेच्छमिन्दीवरसुन्दर ! त्वया ।
तदस्ति किं वस्तु जगत्त्रयीगतं
त्वमीश्वरो यस्य जनैर्न मन्यसे ॥२७॥

समुल्लसत्सम्मदनद्धमानसः
समीहते [यत् खलु] देव ! वासवः ।
निवेद्यते तच्च मया भवत्पुरो
विधेयमेतद् भवता दयानिधे ! ॥२८॥

निजापराधान् परया सपर्यया
हरे ! [1]तिरोधातुमसौ शतक्रतुः ।
भवन्तमत्यन्तमनोविनोदितः
समीहते नेतुमसौ स्वमालयम् ॥२९॥

---

1 अन्तर्भावितण्यर्थः ।

भवत्पदाम्भोजरजोभिरर्जितैः
कुशस्थलीवातिपवित्रताश्रयः ।
प्रसन्नचित्ते त्वयि माधव ! द्रुतं
सुराधिराजस्य पुरी भविष्यति ॥३०॥

सुराङ्गना मङ्गलपाणयः स्थिता:
[1]शिवोऽयमा(28b)वाति शनैः समीरणः ।
अकुण्ठकण्ठीरवविक्रमाधुना
त्वया सुनासीरपुरी निरीक्ष्यताम् ॥३१॥

अपानतः सम्मदवाष्पधारया
निरुद्धकण्ठो विकसन्मुखाम्बुजः ।
उदारमौनेन गुरोरुदीरितं
चिरं चकारानुमतं पुरन्दरः ॥३२॥

निशम्य गीर्वाणगुरोर्गरीयसीं
गिरं तदानन्दमयोऽनयोज्ज्वलः ।
मनः सुराणां हसितामृतद्रवै-
र्विनोदयन् वाचमवोचदच्युतः ॥३३॥

वयं गुरो ! निर्भरभक्तिभाविताः
सदा सुपर्वेशनिदेशकारिणः ।
असौ यदाज्ञापयति प्रसन्नधी-
स्तदाशु धार्यं शिरसैव मादृशैः ॥३४॥

इति ब्रुवाणं यदुनन्दने तदा
मुदा परीतः परया-पुरन्दरः ।
सिषेच पीयूषरसेन सर्वतो
रणस्थलीं मूर्च्छि[त]जीवहेतवे ॥३५॥

---

१ शिरोऽय Ms.

प्रबोधितास्तल्पतलादिवोन्मदा
मुदा तदानीमतिपूर्णमानसाः ।
सुधाभिषिक्ताः परितो रणाङ्गणात्
परासवः सत्वरमुत्थिता बभुः ॥३६॥

वनाग्निकल्पैर्विविधास्त्रसञ्चयै-
र्विशो[षिताना(84a)]मुरुवीरवीरुधाम् ।
नवाम्बुवर्षैरिव निर्भरं तदा
नवीनताकारि भृशं सुधारसैः ॥३७॥

करैरुदारैरिव निर्भरं हरेः
पराहता वैरिवरूथिनीशतैः ।
चिरं रजन्यामिव तारकोत्करा
रणाजिरे वा[सवसैनिका बभुः]।॥३८॥

[पुरा] सुरैः प्रापि वरा सुराङ्गना
ततः सुधासेककृता नवीनता ।
अतः सुखावाप्तिविरोधि तत्क्षणं
जितारयो जीवनमेव मेनिरे ॥३९॥

ततः सुधासङ्गमजातजीवितं
विलोकयन् चारुबलं महोज्ज्वलम् ।
गजेन्द्रमारुह्य मुदा मदोन्मदं
मुरारिणा सार्धमगात् पुरन्दरः ॥४०॥

सुखोपविष्टाः स्फुरदुग्ररोचिषो
महेन्द्रदत्तासु विमानराजिषु ।
प्रयान्तमिन्दीवरसुन्दरं हरिं
मुदानुजग्मुर्यदवः समं सुरैः ॥४१॥

तनुप्रभोद्भासितदिग्विहायसो
विराजमाना वरवीरराजयः ।

मुदा तदालोकयतां समन्ततो
वितेनिरे चेतसि भास्करभ्रमम् ॥४२॥

उदारसंमोदपरा दिवौकसः
समुद्गिरन्तो मुरवैरिणो गुणान् ।
द्रुतं सुरा(४५b)धीशपुरीमुरुश्रियं
विलोकयामासुरखिन्नमानसाः ॥४३॥

विलोक्य तां नेत्रमनोविनोदिनीं
सुराधिराजस्य पुरीमुरुश्रियम् ।
ननन्दुरानन्दसुधापयोनिधौ
[1]निमज्जमाना इव माधवानुगाः ॥४४॥

ततस्तरङ्गिण्य इवेशमम्भसां
श्रियः समृद्धा इव नीतिशालिनम् ।
मरुत्वतस्तां नगरीं गरीयसीं
यदुप्रवीरा विविशुः समं सुरैः ॥४५॥

विलोलिताभिर्मृदुना नभस्वता
महागृहोद्दामदुकूलवल्लिभिः ।
समाह्वयामास मृदङ्गनादिनी
करारविन्दैरिव सा पुरी सुरान् ॥४६॥

अमन्दमन्दारसुचारुसौरभैः
सुरापगाशीतलशीकरैरपि ।
विधूनयन् वारिरुहाणि मारुतो
विनोदयामास मनो मधुद्विषः ॥४७॥

समुद्यदुद्दाममृदङ्गनिःस्वनैः
सुराङ्गनानामपि वल्गुगीतिभिः ।

---

१ ताच्छील्ये चानश ।

अमन्दमानन्द[म]यीव सर्वतः
सुराधिराज[स्य] पुरी तदाभवत् ॥४८॥

विराजमानो नवरोचिरुच्चकै-
र्घनस्वनस्यन्दनमध्यमास्थितः ।
हरिः सुराधीशपुरीनिवासिभि-
(85a)र्मुदा तदालोकि शशीव शारदः ॥४९॥

अथ त्रिलोकीतिलकीभवद्द्युतौ
प्रयाति पूर्णेन्दुमुखे मुरद्विषि ।
समन्ततो देवपुरौकसामभू-
न्मनस्तदालोकनकौतुकोत्सुकम् ॥५०॥

दिदृक्षया संचलितैरितस्ततो
[विलो]कितो वर्त्मनि कैश्चिदच्युतः ।
अचिन्त्यचिन्तामणिलाभसंभव-
प्रमोदसंभारमपारमार्पयत् ॥५१॥

मुकुन्दमालोकयितुं समागता
जवेन काचित् कमनीयलोचना ।
अथैतदुद्दाममहःप्रमोहिता
हिताहितं किञ्चन तत्र नाविदत् ॥५२॥

मुरद्विषद्वीक्षणजातकौतुकात्
प्रकाशयन्तीव मनः समुत्सुकम् ।
चकार काचिन्न करं कलावती
नितम्बबिम्बस्खलितेऽपि वाससि ॥५३॥

समं सखीभिर्भवनादुपागता
समास्थिता वर्त्मनि लोकसंगमे ।
अधात् तदानीं हरिणीव संभ्रमात्
कुलाङ्गना काचन चञ्चले दृशौ ॥५४॥

मुहुर्वदन्त्यो मुरवैरिसद्गुणान्
घनानुरागाः स्खलदम्बरस्रजः ।
श्रमाम्बुसंभास्करबिम्ब([illegible])नाननाः
सुराङ्गनाः संभ्रमसंभृता ययुः ॥५५॥

हरेर्मुखालोकनलोलचेतसां
विनिर्यतीनां भवनान्तरभ्रुवाम् ।
निमेषशून्यैर्नयनैर्नभःस्थल
रराज गवाक्षमयं समन्ततः ॥५६॥

विलोकितुं माधवमुद्गतत्वरान्
द्रुतं व्रजन्त्या भवनान्तरभ्रुवः ।
उदारहारच्युतमौक्तिकोत्करैः
सखीजनः पद्धतिमन्वमीयत ॥५७॥

मृगीदृशामाननबिम्बकान्तिभि-
र्विरेजिरे चारुगवाक्षराजयः ।
दलान्तराणीव सुमेरुकानने
समुल्लसच्चन्द्रमसः करोत्करैः ॥५८॥

न सा सुपर्वेशपुरे नितम्बिनी
यया न दृष्टो हरिरेत्य सादरम् ।
न तादृशः कोऽपि बभूव च स्फुटं
न यस्तदामोदमुदारमाप्तवान् ॥५९॥

निपीतपीताम्बरकान्तिकौमुदी-
सुधारसाः संमदपूर्णमानसाः ।
नितम्बवत्यः प्रतिवर्त्म नागरै-
र्विलोकिताश्चित्रगता इवानिशम् ॥६०॥

समागताः सादरमाशु सन्निधिं
मुदा सुपर्वेशपुरे मृगीदृशः

मुकुन्दमा[न]न्दमयैर्विलो(86b)चनै-
श्चिरं पिबन्त्योऽपि न तृप्तिमाययुः ॥६१॥

तमालनीलद्युतिरक्तलोचनो
मनोविनोदं जनयन् मृगीदृशाम् ।
क्षणं च यद्येष निरीक्ष्यते तदा
मुधा सुधापानकदर्थनाशतैः ॥६२॥

इति ब्रुवाणाः स्फुरदिन्दुसुन्दरे
मुखारविन्दे वनमालिनोऽबलाः ।
निमज्जयामासुरुदारमानसाः
समं हृदा नेत्रमधुव्रतावलीम् ॥६३॥

सभाजितो देवनितम्बिनीगणै-
र्विलोचनोदारसरोजराजिभिः ।
मुदा तदानीमतिपूर्णमानसो-
ऽविशन् मुकुन्दोऽथ महेन्द्रमन्दिरम् ॥६४॥

सभागृहद्वारमवाप्य सादरं
मतङ्गजेन्द्रादवरुह्य वासवः ।
नियोजयन् भृत्यगणानितस्ततः
प्रकाशयामास निजां विनीतताम् ॥६५॥

करावलम्बैरवतार्य वाहनात्
पुरःसरः संमदपूर्णमानसः ।
विनीतमूर्तिर्मघवा मुरद्विषं
प्रवेशयामास निवेशमात्मनः ॥६६॥

स्वयं सुराणामधिपेन सादरं
सुवर्णसिंहासनसन्निवेशिताः ।
विरेजिरे संसदि वीरराजयो
मखेषु वेदिज्वलिता इवाग्नयः ॥६७॥

नमस्कृता सादरमाशु सत्यया
 चिरं परिष्वज्य पुलोमसंभवा ।
समं सखीभिः परया मुदान्विता
 निनाय तामाशु निजं निकेतनम् ॥६८॥

पुलोमजार्धासनसंगतां तदा
 चिरा[य मत्रा]जितराजनन्दिनीम् ।
सभाजयामासुरुदारमानसाः
 सुरस्त्रियः कुङ्कुमचन्दनादिभिः ॥६९॥

पुरन्दरोऽपि स्मितसुन्दराननः
 सभाजयित्वानुगता[न्] सुरद्विषः ।
महर्द्धिसंभारभृतो निजालयान्
 निवेशयामास निवासहेतवे ॥७०॥

विसृज्य भूमीपतिमण्डलं तदा
 सुरानपि स्मेरमुखो विसर्जयन् ।
समं मुकुन्देन मुदा करम्बितः
 पुरन्दरो मन्दिरमुज्ज्वलं ययौ ॥७१॥

हर्म्येषु हेमखचितेसु तदा वसन्तः
 सन्तोषसन्ततिपराः सरसान्नपानैः ।
तल्पैः सुकोमलदुकूलमनोनुकूलैः
 सर्वे क्षपां नृपतयः क्षपयांबभूवुः ॥७२॥

सविनयमनुवेलं लालितो वासवेन
 त्रिदशयुवति(87a)वृन्दैरादरादर्च्यमानः ।
सपदि मुदितचेताः किन्नरीचारुगीतै-
 र्मुररिपुरपि रम्यां यामिनीं तामनैषीत् ॥७३॥

स्वान्तध्वान्तविधूननं प्रणमतां दीर्घोदरं ध्यायता
 धन्यं किञ्चन हृद्गतं नवजवासिन्दूरसान्द्रं महः ।

धीरश्रीकविक[र्णपू]रकृतिना कौतूहलान्निर्मिते
काव्ये चारुणि पारिजातहरणे सर्गो ययौ षोडशः ॥७४॥

—०—

## [ सप्तदशः सर्गः ]

श्रीपतिः परमया मुदान्वितै-
रर्चितः प्रणयनिर्भरैः सुरैः ।
नाकनाथनगरेऽति[सज्जिते
स]त्यया सममवाप संमदम् ॥१॥

नाकनायकगणैः समर्चितः
किन्नरीभिरुपवीणितो मुदा ।
सर्वतः सुरपुरे परिभ्रम-
न्नुत्सवं हरिरपारमाप्तवान् ॥२॥

संविगाह्य [यदवो यदृच्छया
स्वच्छशी]तलजलां सुरापगाम् ।
पारिजातपरिकल्पितस्रजो
भूभुजो मुमुदिरे सुरा इव ॥३॥

वीक्ष्य लोचनमनोविनोदिनं
पारिजातमुपजातकौतुकम् ।
बहुमानि मनसैव सादरं
[केशवेन सुरलोकवैभवम्] ॥४॥

(87b) चन्दनानिलविलासलालिते
सेविते सुरभिणा दिवानिशम् ।
संचरन् दयितया समं शनै-
र्नन्दने मुदमवाप माधवः ॥५॥

नृत्यगीतगुणगर्वितात्मना-
मुल्लसल्ललितकायरोचिषाम् ।

[नन्दनन्दनमनन्दयन भृशं
    चेष्टिता]नि सुरराजसुभ्रुवाम ॥६॥

देवराजनगरीनिवासिनां
    लोललोचनचकोरसंचयः ।
शारदेन्दुसमसुन्दरद्युतौ
    श्रीपतौ मुदमविन्ददुच्चकैः ॥७॥

कायकान्तिभ[रमज्जितान्तरं
    संप्रसूतकुतु]केन तेजसा ।
लोचनैरमृतमपिबन मुदान्विताः
    शर्वरीशमिव सर्वतो जनाः ॥८॥

ताण्डवैर्ललितगीतनिस्वनै-
    र्वाहनैर्वसनभूषणैरपि ।
सप्रियं सुरपुरीनिवासिनो
    माधवं प्रमुदिताः [सि]षविरे ॥९॥

शारदेन शशिनेव शर्वरी
    कामिनेव ललिता कलावती ।
देवराजनगरी गरीयसी
    माधवेन सह सा विभूषिता ॥१०॥

संततस्मितसुधालसन्मुखे
    नीलनीरदनिभे रमापतौ ।
लोचनै[रभिसृतस्य चेतसः
    प्राभवन्न सुरलोकसुभ्रुवः] ॥११॥

(७४a) याभिरैक्षि नलिनेक्षणस्त]दा
    शारदेन्दुरुचिरो रमापतिः ।
ताभिरुल्लसितगर्वनिर्भरं
    द्रागमानि सफलं निजं जनुः ॥१२॥

अम्बराभरणपानभोजनै-
स्तोषिता मघवता निरन्तरम् ।
उल्लसत्कनकहर्म्यवा[सिनो
भूभृतः सुरवधूरतो]षयन् ॥१३॥

[पानभोजनविलासजस्तथा
नैव भूमिवलये कदाचन] ।
अन्वभावि सहसैव तैर्यथा
संमदो नवनवः प्रतिक्षणम् ॥१४॥

यद् यदिष्टमिह विष्टपत्रये
वस्तु चारु ददृशुर्दिवौकसः ।
आदराद् ददुरुदारमानसा
माधवाय [सबलाय तत्तदा] ॥१५॥

[बान्धवान् प्रणयसंभृतान् यदा
स्वैरमस्मरदसौ सुपर्वभिः] ।
पूजितोऽपि मुरजिन्निजां पुरीं
गन्तुमुत्सुकमतिस्तदाभवत् ॥१६॥

वीक्ष्य गन्तुमनसं मधुद्विषं
बाष्पपूर्णनयनो [मरुत्पतिः] ।
[आलिलिङ्ग] मुहुरेनमुत्सुको
वत्सलो विरहशङ्कया भृशम् ॥१७॥

माधवाय ददतस्तदादरात्
[काममा]शिषमुदारमा[न]साः ।
नारदप्रभृतयो मुनीश्वराः
साम संभृतपदस्वरं जगुः ॥१८॥

तत्र पूर्णदधिपात्रपाणयो
मङ्गलोल्लसितचारुगीतयः ।

[प्रस्थितस्य शकुनानि शार्ङ्गिणः
सर्व ] व्यरचयन् सुराङ्गनाः ॥१९॥

(४४b) किन्नरीमधुरगीतनिस्वनै-
रप्सरोललि]तभाषितैरपि ।
चारुतूर्यनिनदैश्च निर्भरं
स क्षणो रसमयस्तदाभवत् ॥२०॥

तुङ्गमङ्गलमभङ्गमिच्छतां
तत्र पुण्यजनुषां द्विजन्मना[म्] ।
उल्ललास समयोचितोऽभितः
श्रौतमन्त्रनिनदः श्रुतिप्रियः ॥२१॥

ये सुरेन्द्रसदने द्विजास्तदा
[क्षेम्य]कृत्यभरयन्त्रिता भृशम् ।
प्रस्थिते यदुपतौ निजालयं
तेऽपि पुण्यजनुषः समाययुः ॥२२॥

भाविमाधववियोग[शङ्कया
म्लानमिन्द्रपुरसुभ्रुवां मुखम् ।
अञ्जसा बत तदाजयत्तमा-
मुद्यदिन्दुरुचि]संभृताम्बुजम् ॥२३॥

आशिषा सममशेषसंपदः
प्रीतये मुररिपोरदाद् विधिः ।
सिद्धयोऽथ सहसाणिमादय-
[स्तत्र सन्निचकृषुर्वशंवदाः ॥२४॥

प्रत्यपादि हरयेऽद्भुता द्युतिः
प्राज्यसंमदधृ]ता शिखावता ।
आतपत्रमथ काञ्चनप्रदं
पाथसां पतिरदान्मुदान्वितः ॥२५॥

माधवस्य वपुषि स्वकं तदा
वीर्यमूर्जितमदान्मुदानिलः ।
यक्षभूभृदपि कोपमक्षयं
[न ह्यवै]क्षत मुरारयेऽर्पयन् ॥२६॥

आहवे विजयसिद्धिमुद्धतां
दीर्घमायुरपि संददौ यमः ।
नायकोऽथ फणिनामदान्मुदा
रत्नराशिममितं मुरारये ॥२७॥

यद्यदिष्टमभवद्दिवौकसां
वाहनं वसुविभूषणादिकम् ।
आदरादुपगत[ा मुरार]ये
तत्तदाशु ददुरुल्लसत्त्विषः ॥२८॥

सुप्रतीकसदृशा[1]नुरुत्विषो
दन्तिनो मदभरेण मेदुरान् ।
वाजिनश्च तुरगेशसन्निभान्
लक्षशः सुरपतिस्तदा ददौ ॥२९॥

नृत्यगीतगुणकेलिकोविदा[ः
का]मिनीर्ललितकायरोचिषः ।
किन्नरैः सममदान्मुदान्वितो
माधवाय सदयः[2] शतक्रतुः ॥३०॥

भूषणं सुरपुरस्य पूरकं
याचकेहितभरस्य वासवः ।
देहविद्धमिव च स्वकं यशः
पारिजातमददान्मुरारये ॥३१॥

---

१ दृद्दशा Ms. २ ददता Ms,

आदरेण परिरभ्य निर्भरं
वाष्पपूर्णनयना पुलोमजा ।
भूषणाम्बरविलेपनादिभि-
र्माधवस्य दयितामतोषयत् ॥३२॥

उल्लसन्मणिमयं महास्वनं
स्यन्दनं हयसहस्रयोजितम् ।
मातलिर्मघवतो नि(२१b)देशतो
माधवस्य पुरतो न्यवेदयत् ॥३३॥

संविसृज्य विनयोर्जितस्तदा
धातृशङ्करमुखा[न्] दिवौकसः ।
हीरहस्तिहयहाटकादिभि-
र्याचका[न्] द्रुतमतोषयद् विभुः ॥३४॥

अश्रुपूर्णनयनाब्जशोभिना
वासवेन परिरभ्य निर्भरम् ।
सादरं शिरसि चुम्बितो मुदा
सन्ननाम मुरजिद्दिवौकसः ॥३५॥

सन्निवार्य शपथैरुदारधी-
रश्रुपूर्णनयनं सुरेश्वरम् ।
आरुरोह दयितायुतो रथं
मेरुमिन्दुरिव रोहिणीसखः ॥३६॥

ऊर्जितैर्द्विरदवृन्दगर्जितै-
र्निर्भरैरपि च तूर्यनिस्वनैः ।
पूरयन् दश दिशः समन्ततो
निर्जगाम सगणो यदूद्वहः ॥३७॥

संमदोल्लसितयादवं तदा
दूयमानसुरसैन्द्रपत्तनम् ।

